डिसेम्बर् 2006  Rs. 13 /-

# संस्कृत चन्दमामा

आ षष्टेः वर्षेभ्यः विज्ञानविनोदयोः प्रकाशयित्री प्रसारयित्री च विशिष्टा पत्रिका

# TEST YOUR IQ

- Which type of mosquitoes eat other mosquitoes?
- A 11th century temple has no deity, no idol, no worship! Where is it located?
- A temple archway has the tales from the Panchatantra sculpted on it. Where will you go to see them?
- Which dog lived the longest in history?
- Who or which will you associate with when you are told about Fragania?
- Someone cut off his right hand with his left hand and went for his last battle (against the British army). Who was it?
- Where is Asia's largest Rose Garden located?
- What is the difference between Julemanden and Joulupukki?

If you feel you are stumped, don't worry, you'll get all the answers in Junior Chandamama December 2006 issue. Go, grab a copy!





# चाल्यतां खड्गः चिकनगुन्या, डेङ्गे इत्येतौ असुरौ विरुध्य...





विभिन्नजातीयाः मशकाः अभिज्ञायन्ते तत्तन्नाम्ना इति किं भवन्तः जानन्ति ?

अयीडेस्मशकाः एव पूर्वोक्तयोः रोगयोः कारणभूताः । ते बालान्, तरुणान्, वृद्धान्, महिलाः च दंशनेन पीडयितुम् अर्हन्ति ।

* 'अयीडेस् ईजिप्टी'कुलीयाः मशकाः रोगाणूनां प्रसारं कुर्वन्ति ।

## क्रियतां सङ्घर्षः आत्मरक्षणाय !!




१. यत् वस्त्रं समग्रं शरीरम् आवृणुयात् तादृशम् एव वस्त्रं ध्रियताम् । यावच्छक्यं शरीरस्य निरावरणता निवार्यताम् ।

२. यदि मशकनिवारकाणां लेप्यानाम् उपयोगः सम्मतः, तर्हि रात्रौ शयनसमये अनावृते भागे तस्य लेपनं क्रियताम् ।

३. मशकनिवारकं जालं प्रसार्य शयनम् एव प्रशस्तम् ।

४. गृहे मत्स्यालयः किम् अस्ति ? तर्हि तत्रत्यस्य जलस्य परिवर्तनम् आधिक्येन क्रियताम् । दिनद्वये दिनत्रये वा सकृत् जलस्य परिवर्तनम् अवश्यं भवेत् ।

५. जलागारं पिहितं भवतु इति ज्येष्ठाः स्मार्यन्ताम् । यत्र जलसङ्ग्रहः स्यात् तत्र आवरणम् अवश्यं भवेत् ।

६. पेयं जलं शीतके दिनद्वयात् अधिकं कालं यावत् मा स्थाप्यताम् । दिनद्वये एकवारं तत्रत्याः जलकूपीः रिक्तीकृत्य सम्यक् प्रक्षाल्य तासु नूतनं जलं पूर्यताम् ।

७. गृहस्य प्रकोष्ठानाम् अध्ययनप्रकोष्ठादीनां च स्वच्छता परिरक्ष्यताम् । अनपेक्षितानि वस्तूनि क्षिप्यन्ताम् । यतः मशकानां सन्तानस्य उत्पत्तिः तेषु एव भवितुम् अर्हति ।

भारतस्य बालानां स्वास्थ्यम् अभिलक्ष्य भवतां पत्रिकया प्रकाश्यमानम् अस्ति एतत् ।




चन्दमामा

सम्पुटः - २२ डिसेम्बर् - २००६ सञ्चिका - १२




## एतस्य अङ्कस्य विशेषाः













## अन्तरङ्गम्




SUBSCRIPTION

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**

***Remittances in favour of Chandamama India Ltd.***
to
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
**No. 82, Defence Officers Colony**
**Ekkatuthangal,**
**Chennai - 600 097**
**E-mail :**
**subscription@chandamama.org**


## चन्दमामाप्रश्नावली - ९ (अक्टोबर् - २००६)

संस्कृतचन्दामामावाचकेषु केनापि समुचितम् उत्तरं न प्रेषितम् इत्यतः वयं कस्मैचिदपि पारितोषिकं यच्छन्तः न स्मः । वाचकानां ज्ञानाय नवम्याः प्रश्नावल्याः उत्तरम् अधः प्रकाशयन्तः स्मः । सर्वे वाचकाः एतस्यां प्रश्नावलीस्पर्धायां सोत्साहं भागं वहेयुः इति अस्माकम् अभ्यर्थना ।



*संस्थापकौ –*
चक्रपाणिः, बि. नागिरेड्डिः च

# परिसरस्वच्छताविषये बद्धादरता स्यात्

एषु दिनेषु उभौ शब्दौ आधिक्येन श्रूयेते – चिकनगुन्या डेङ्गे चेति । उभयम् अपि ज्वरयोः नाम । गतात् मे-मासात् एतयोः पीडा भारते दृश्यमाना अस्ति । 'चिकनगुन्या' इत्येतत् आफ्रिकादेशस्य वृक्षविशेषस्य नाम, यश्च वक्रगत्या वर्धते । एतेन रोगेण ग्रस्ताः अपि ऋजुतया स्थातुम् अशक्नुवन्तः अवनतपृष्ठाः भवन्ति । डेङ्गेज्वरश्च विषाणुजीविनां कारणतः उत्पद्यते । देशे जातानि संशोधनानि ज्ञापयन्ति यत् एतौ ज्वरौ मशकदंशनात् उत्पद्येते इति । मशकानां सन्तानोत्पत्तिः प्रसारः च अवरुद्धः चेत् एव एतयोः रोगयोः निवारणं शक्यम् ।

सर्वतोमुखं चिन्तनं ज्ञापयति यत् एतस्य मूलापराधः अस्माकम् एव इति । परिसर-स्वच्छताविषये अनादरः, गृहे अनपेक्षितानां रोगकारणानां वस्तूनां सङ्ग्रहः च एतस्य रोगस्य उत्पत्तौ मूलं कारणम् । नगरेषु मलिनवसतयः बहुधा दृश्यन्ते । तत्र मलिनजलं सङ्गृहीतं भवति । ततश्च भवति रोगप्रसारः । रोगप्राप्त्यनन्तरं चिकित्साविषये चिन्तनात् अपि रोगः एव यथा न प्राप्येत तथा चिन्तनं वरं खलु ? किन्तु नीतिरेषा पुस्तकमात्रे दृश्यते । वयम् एतद्विषये 'सर्वकारं' निन्दामः । सर्वकारः नाम कः ? अस्माभिः एव चिताः प्रतिनिधयः एव तस्य अङ्गानि ।

वयं स्वकर्तव्यं कदापि न विस्मरेम । परिसरस्वच्छताविषये बद्धादराः स्याम । परिसरस्वच्छतायाः संरक्षणं तद्वासिनां गुणवत्तां यथा, तथैव तेषां स्वास्थ्यस्थितिम् अपि द्योतयति ।

*सम्पादकः* – विश्रम्





# वाचकानां पुटोऽयम्

अहं १९६५ तमात् वर्षात् चन्दमामायाः ग्राहकः अस्मि । १९८४ तमात् वर्षात् अहं चन्दमामायाः लेखकः अपि अस्मि । पूर्वं सन्ध्याकाले पितामह्या सह गृहस्य पुरतः वितर्दिकायाम् उपविश्य चन्दमामां यत् पठामि स्म तत् इदानीम् अपि मम स्मृतिपथे अस्ति । सुखदः अनुभवः सः । चन्दमामायां मम प्रथमा कथा यदा प्रकाशिता अभवत् तदा प्राप्तः आनन्दः तु अवर्णनीयः । चन्दमामया वाचकत्वेन कथालेखकत्वेन च मम प्रोत्साहनं बहुधा कृतम् अस्ति ।

चन्दमामायाः पठनं संस्कृतिपरिरक्षणतुल्यम् । किञ्चित्कालं चन्दमामायाः प्रकाशनं यदा स्थगितम् आसीत् तदा भासते स्म यत् 'जीवनदी' विलुप्ता जाता इति । भगवतः कृपया सा च जीवनदी अद्य प्रवहन्ती दृश्यते ।

रामायणकाले बालकः रामः चन्दमामं प्राप्तुम् इच्छन् यदा रोदनम् अकरोत् तदा राजा दशरथः दर्पणे चन्दमामं दर्शयन् पुत्रं तोषितवान् इति कथा श्रूयते । यदि तादृशी घटना अद्य प्रवृत्ता स्यात् तर्हि 'चन्दमामा'पत्रिकायाः दानात् पुत्रस्य तर्पणं कृतम् अभविष्यत् प्रायः । चन्दमामः आकाशस्य भूषणं, चन्दमामा च भूमेः आभरणम् । मम हार्दा इच्छा अस्ति यत् एषा चन्दमामा प्रकाशं विकिरन्ती अद्वितीयतां रक्षेत् इति ।

– रामानन्दशर्मा, पाटना

अहं चन्दमामां आ १९५६ तमात् वर्षात् जानामि । तदा तस्य मूल्यम् आसीत् ६० पैसात्मकम् । वेताल-बोधिसत्त्व-मान्त्रिकादिकथाः पौराणिककथाः च भवन्ति स्म तत्र । महती आकर्षकता भवति स्म । अद्यापि बालानां तोषकरी पत्रिका एषा एका एव । पूर्वं प्रश्नस्पर्धादयः न भवन्ति स्म । अद्य ताः बालान् चिन्तनाय प्रवर्तयन्त्यः पठने प्रेरयन्ति । पूर्वं पृष्ठसङ्ख्याः अधिकाः भवन्ति स्म । शङ्करस्य चित्राणि चित्तम् आकर्षन्ति स्म । चन्दमामा सदा स्वप्रभां प्रसारयन्ती भवतु ।

– बालकृष्णः, मेरठ

अगस्टमासस्य चन्दमामायाः दर्शनात् महान् सन्तोषः प्राप्तः । कथानां प्राधान्यं विशेषतः आनन्ददायकः । दीर्घकालस्य अनन्तरं वीर-सीतारामादीनां चित्रकाराणां चित्राणि दृष्टानि तत्र । एतस्मात् तु मम सन्तोषः इतोऽप्यधिकः जातः ।

– वै. गोपालः, हैदराबाद



# पिशाचाभ्यां कारितः विवाहः

विमातुः सुमित्रातः कृष्णवेणी अनेकानि कष्टानि अनुभूतवती । यदा सा विंशतिवर्षीया आसीत् तदा विषमज्वरस्य कारणतः तस्याः पिता दिवं गतः आसीत् । विमाता तु प्राप्तवयस्कायाः अपि तस्याः विवाहं सर्वथा न इच्छति स्म । 'विवाहानन्तरं यदि एषा पतिगृहं गच्छेत् तर्हि अत्र गृहकार्याणि कः निर्वहेत् ?' इति चिन्तनं तस्याः । किन्तु 'कृष्णवेण्याः विवाहम् अकृत्वा यदि औरसपुत्र्याः विवाहः निर्वर्त्येत तर्हि जनाः निन्देयुः' इति भीतिः अपि ।

अतः एव सा जनान् सदा वदति स्म – "विवाहानन्तरं वर्षाभ्यन्तरे पतिः एतां परित्यज्य गमिष्यति इति ज्योतिषिकैः उक्तम् अस्ति । अतः एव एतां परिणेतुं कोऽपि न उत्सहते" इति ।

अत्रान्तरे सप्ततिवर्षीयः कश्चन वृद्धः कृष्णवेणीं परिणेतुं सज्जः जातः । सः अवदत् – "जातकफले मम विश्वासः नास्ति । एषा मह्यम् अरोचत । अतः अहम् एतां परिणेतुं सन्नद्धः अस्मि" इति ।

तेन वृद्धेन सह कश्चन विवाहघटकः आगतः आसीत् । सः सुमित्राम् एकान्ते अवदत् – "यदि एषः विवाहः अङ्गीक्रियेत तर्हि अस्माकं स्वामी भवत्यै द्विलक्षं रूप्यकाणि दास्यति । विवाहव्ययम् अपि सः एव निर्वक्ष्यति" इति ।

"एवं तर्हि कुतो विलम्बः ? दशदिनाभ्यन्तरे एव अहं विवाहं निर्वर्तयिष्यामि । सर्वविधां सज्जतां कृत्वा वार्तां प्रेषयिष्यामि भवद्भ्यः" इति ससन्तोषम् अवदत् सुमित्रा ।

एतां विवाहवार्तां श्रुत्वा कृष्णवेणी विमातरम् अवदत् – "अम्ब ! एषः विवाहः सर्वथा न इष्यते मया । आजीवनं कन्यात्वेनैव स्थातुम् अपि अहं सिद्धा । कृपया एतं विवाहं निवारयतु भवती" इति ।

"किं विवेकः अस्ति भवत्याः ? यावत्




भवत्याः विवाहः न सम्पद्येत तावत् मम पुत्र्याः अपि विवाहः न प्रवर्तेत । यदि एतस्य विवाहस्य विरोधः क्रियेत तर्हि प्राणवियोगः प्राप्तव्यः भवेत् भवत्या'' इति कठोरस्वरेण अवदत् सुमित्रा ।

वृद्धस्य परिणयात् अपि मरणम् एव वरम् इति अचिन्तयत् कृष्णवेणी । अतः तस्याम् एव रात्रौ सर्वैः यदा गाढा निद्रा प्राप्ता तदा सा विना शब्दं ततः निर्गतवती अरण्यं प्रति ।

श्रावणमासः सः । वृष्टिकारणतः मार्गाः पङ्कमयाः आसन् । तथापि तादृशेन एव मार्गेण गच्छन्ती कण्टकानि हस्तेन अपसारयन्ती कृष्णवेणी अरण्यं प्रविष्टवती । तत्र निरन्तर-सञ्चारकारणतः जातस्य श्रमस्य परिहाराय सा कस्यचित् कूपस्य भित्तेः उपरि उपविष्ट-वती ।

तां दृष्ट्वा काचित् पिशाची आत्मना सह स्थितं पिशाचम् अवदत् - ''एषा सुन्दरी तरुणी । महतः कष्टस्य कारणतः एव एषा एवम् अरण्यम् आगतवती स्यात् । एतस्याः किं कष्टम् इति आवां विचारयाव'' इति । ततः तौ कृष्णवेण्याः पुरतः प्रत्यक्षौ जातौ ।

कृष्णवेणी तौ दृष्ट्वा किञ्चिदपि न भीता । प्रत्युत मन्दहासं प्रकटितवती सा । तदा आश्चर्यम् अनुभवन्तौ तौ पिशाचौ पृष्टवन्तौ - ''आवयोः दर्शनात् किं भीतिः न प्राप्यते भवत्या ?'' इति ।

''मरणाय सन्नद्धायाः मम भवतोः दर्शनात् भीतिः कुतः ?'' इति विषादेन अवदत् कृष्ण-वेणी ।

तदा तौ पिशाचौ पृष्टवन्तौ - ''मरणं प्राप्तुं किं भवती आगतवती ? तादृशं किं कष्टम् प्राप्तं भवत्या ?'' इति ।

तदा कृष्णवेणी प्रवृत्तं सर्वं श्रावयित्वा - ''विमाता मां सदा पीडयति । तस्य आसन्न-मरणस्य वृद्धस्य परिणयात् अपि स्वयं मरण-प्राप्तिः वरं खलु ?'' इति अवदत् ।

तस्यां करुणां प्रदर्शयन्ती पिशाची अवदत् - ''असहायायाः एतस्याः नितरां शोचनीया स्थितिः'' इति ।

तदा पिशाचः अवदत् - ''युक्तम् उक्तं भवत्या । आवाभ्याम् एतस्याः साहाय्यं करणीयम्'' इति ।

ततः तौ परस्परं समालोच्य कृष्णवेणीम् उक्तवन्तौ - ''वत्से ! अलं चिन्तया । आवां सुन्दरं योग्यं कञ्चित् तरुणम् अन्विष्य भवत्याः विवाहं निर्वर्तयिष्यावः । आवाभ्यां यथा उच्यते

तथा व्यवहरणीयं भवत्या । किमयं प्रस्तावः अनुमन्येत ?'' इति ।

कृष्णवेणी अङ्गीकारपूर्वकं शिरः चालितवती । ततः तौ पिशाचौ मानवरूपं प्राप्तवन्तौ । एकं शकटं सृष्ट्वा चतुरः वस्त्रबन्धान् चापि तौ सृष्टवन्तौ । तान् वस्त्रबन्धान् शकटे आरोप्य तौ कृष्णवेणीम् उक्तवन्तौ - ''इतः परम् आवां भवत्याः मातापितरौ । अवश्यं स्मर्तव्यम् एतत्'' इति ।

ततः ते शकटम् आरुह्य प्रस्थितवन्तः । मध्येमार्गं प्रवाहपूर्णा काचित् नदी प्राप्ता । अतः प्रयाणं स्थगितम् । तत्र अन्योऽपि शकटः स्थगितः आसीत् । कश्चन युवकः शकटस्य पार्श्वे स्थितः आसीत् । शकटस्य अन्तः त्रयः आसन् । विचारणात् ज्ञातं यत् शकटे स्थिताः युवकस्य माता पिता भगिनी च इति ।




तावता युवकस्य पिता अवदत् - ''कुत्र प्रस्थितं भवद्भिः ? वयं दुर्गपुरवासिनः । कनकपुरे योग्या वधूः अस्ति इति श्रुतम् । तां द्रष्टुं प्रस्थिताः वयम् । कन्यापितरः लक्षशः वरदक्षिणां दातुं सिद्धाः सन्ति बहवः । किन्तु कापि कन्या अस्मत्पुत्राय एतस्मै सूर्याय न अरोचत'' इति ।

एतत् श्रुत्वा पिशाची अवदत् - ''अस्माकं पुत्र्याः कृष्णवेण्याः अपि एतादृशी एव समस्या । एतस्याः सौन्दर्यं दृष्ट्वा आकृष्टाः सन्तः बहवः तरुणाः एतां परिणेतुम् अग्रे आगताः । वरदक्षिणा कापि दातव्या नास्ति इत्यपि उक्तं तैः । किन्तु कृष्णवेण्यै तु तेषु कोऽपि न अरोचत । सद्यः अस्माभिः श्रुतं यत् प्रतापपुरे कोऽपि योग्यः वरः अस्ति इति । तस्य दर्शनाय प्रस्थिताः वयम् । किन्तु एषा नदी विघ्नाय जाता'' इति ।

''वरदक्षिणाम् अस्वीकृत्यापि कोऽपि तरुणः किं काञ्चित् तरुणीं परिणेतुं सिद्धः भवेत् ? सर्वथा अविवेकिता एषा'' इति अवदत् सूर्यस्य माता ।

सूर्यः एतत् सम्भाषणं शृण्वन् आसीत् । सः मातापितृभ्यां सह सम्भाष्य पिशाचीसमीपम् आगत्य अवदत् - ''वयं भवत्याः पुत्र्याः दर्शने उत्सुकाः स्मः'' इति ।

पिशाची कृष्णवेणीं रथात् अवातारयत् । तस्याः सौन्दर्यं दृष्ट्वा सूर्यः व्यामुग्धः जातः । सूर्यस्य दृढकायतां सौन्दर्यं च दृष्ट्वा कृष्णवेणी लज्जया अवनतशिरस्का जाता ।

एतत् दृष्ट्वा पिशाचः ससन्तोषम् अवदत् - ''बहोः कालात् अनन्तरम् एतादृशः कश्चन



वरः अस्माभिः दृष्टः, यश्च अस्माकं पुत्र्यै अरोचत'' इति ।

''सुन्दर्याः कन्यायाः प्राप्तिमात्रेण विवाहः न प्रवर्तेत । वयम् अपि सुन्दरीं स्नुषाम् इच्छामः । किन्तु वरदक्षिणा अपि आतृप्ति प्राप्येत'' इति अवदत् सूर्यस्य माता ।

सूर्यः कृष्णवेण्याः समीपं गत्वा पिशाचौ अवदत् - ''एषा मम सम्मत्यै जाता'' इति ।

तदा तस्य माता झटिति अवदत् - ''भवतः सम्मत्यै जाता स्यात् नाम एषा । वरदक्षिणा कियती प्राप्येत इत्यपि ज्ञातव्यम् एव खलु अस्माभिः ?'' इति ।

''श्वः भाद्रपदमासस्य आरम्भः । अग्रिमे मासद्वये विवाहमुहूर्तः कोऽपि नास्ति इति श्रूयते । ग्रामपुरोहितेन एतत् ज्ञापितम् अस्ति'' इति अवदत् सूर्यस्य पिता ।

''भाद्रपदमासस्य आरम्भस्य अनन्तरं खलु विवाहमुहूर्तस्य अप्राप्तिः ? उभयपक्षीयाः वयं सर्वे अत्रैव स्मः एव । अतः अद्य एव विवाहः प्रवर्ततां नाम'' इति अवदत् पिशाची ।

तदा सूर्यस्य माता अवदत् - ''वरदक्षिणाधनं पुरतः उपस्थितं चेदेव विवाहविषये चिन्तनम्'' इति ।

तदा पिशाचः चतुरः धनस्यूतान् शकटतः आनयत् । तानि सुवर्णनाणकानि दर्शयन् सः अवदत् - ''वरदक्षिणारूपेण यावत् भवती इच्छति तावत् तु अत्र अस्ति एव । तदतिरिच्य अत्रत्येन धनेन एव भोजनव्ययः अपि निर्वोढुं शक्यः'' इति ।

सूर्यस्य माता तान् धनग्रन्थीन् स्वस्य शकटे स्थापितवती । ततः सूर्यः कृष्णवेणी च परस्परम् अङ्गुलीयकविनिमयं कृतवन्तौ । प्रातःकालाभ्यन्तरे तयोः विवाहः विधिवत् सम्पन्नः एव ।

नदीतीरे पर्वतस्य उपरि कश्चन देवालयः दृश्यते स्म । तं दूरात् दृष्ट्वा कृष्णवेणी सूर्यम् अवदत् - ''आदौ आवां तत् मन्दिरं गत्वा आगच्छाव । ततः भवतः ग्रामं प्रति गमनं भवतु'' इति ।

''भवन्तौ तत्र गच्छताम् । ग्रामं गत्वा भोजनादिव्यवस्था करणीया खलु ? अतः आवाम् अग्रे गच्छावः'' इति अवदत् सूर्यस्य पिता ।

''भवतु नाम । आवां भाटकशकटं किञ्चित् प्राप्य आगमिष्यावः'' इति अवदत् सूर्यः ।

ततः सूर्यः कृष्णवेण्याः हस्तं गृहीत्वा तां

नद्याः अपरं तीरं प्रापितवान् । 'यदि वस्तुस्थितिं मम पतिः जानीयात् तर्हि घोरः परिणामः सम्मुखीकरणीयः भवेत्' इति चिन्ता आरब्धा कृष्णवेण्याः मनसि ।

बहुधा विचिन्त्य वस्तुस्थितिकथनम् एव वरम् इति निश्चित्य सा सूर्यम् उद्दिश्य – ''आर्य ! क्षन्तव्या अहम् । वस्तुतः आवयोः विवाहं निर्वर्तितवन्तौ न मम मातापितरौ, अपि तु पिशाचौ'' इति उक्त्वा प्रवृत्तं निवेदितवती ।

अत्रान्तरे पृष्ठभागे महान् कोलाहलः श्रुतः । ''वञ्चना ! महती वञ्चना !! एतेषु ग्रन्थिषु न सन्ति सुवर्णनाणकानि, प्रत्युत सन्ति अस्थिखण्डाः भस्म च'' इति वदन्ती सूर्यस्य माता ग्रन्थिस्थं सर्वं भूमौ पातितवती ।

एतत् श्रुत्वा पिशाची पिशाचः च ताम् उद्दिश्य – ''आवयोः अपि काचित् स्नुषा आसीत् । तया वरदक्षिणा न आनीता इत्यतः आवां तां बहुधा पीडितवन्तौ । ततः आवाभ्यां पिशाचजन्म प्राप्तम् । आवाभ्यां कृतं पापं यदि भवत्या अपि क्रियेत तर्हि भवती अपि पिशाचजन्म प्राप्नुयात् निश्चयेन । पिशाचजन्म प्राप्तव्यम् उत स्नुषया सह उत्तमः व्यवहारः करणीयः इति भवत्या निश्चेतव्यम् । अन्यच्च, एतदत्र स्मर्तव्यं यत् यदि स्नुषा भवत्या पीड्येत तर्हि घोरा विपत्तिः सम्मुखीकरणीया भवेत् इति'' इति उक्त्वा ततः अदृश्यतां गतवन्तौ ।

सूर्यस्य मातापितरौ एतत् श्रुत्वा क्षणं यावत् स्तब्धौ जातौ ।

तावता तत्र उपस्थितः सूर्यः – ''तौ यद्यपि पिशाचौ, तथापि तयोः परोपकारबुद्धिः अस्ति । भवन्तौ तु वरदक्षिणाशाग्रस्तौ सन्तौ पिशाचौ जातौ स्तः । भवद्भ्याम् अपि तौ पिशाचौ एव श्रेष्ठौ'' इति अवदत् ।

''सत्यम् । आवयोः विवेकः सर्वथा नष्टः आसीत् । वरदक्षिणारूपेण पिशाचेन ग्रस्तौ आस्व आवाम् । इदानीं विवेकः प्राप्तः अस्ति आवाभ्याम् । लक्ष्मीसदृशी स्नुषा सौभाग्येन एव प्राप्ता अस्ति । तां प्रीत्या द्रक्ष्यावः आवाम्'' इति अवदतां मातापितरौ ।

मातरि पितरि च जातं परिवर्तनं दृष्ट्वा सूर्यः नितरां सन्तुष्टः जातः । सः प्रीत्या कृष्णवेण्याः हस्तं निपीडितवान् ।



# मधुनः बिन्दुतः प्रवृत्ताः घटनाः

प्रतिष्ठानपुरे कश्चन पथिकः मधुपूर्णं घटं स्वीकृत्य गच्छन् आसीत् । कदाचित् प्रमादवशात् स च घटः भूमौ पतितः । मधुनः आस्वादनाय काचित् मधुमक्षिका तत्र आगता । तां खादितुं काचित् गृहगोधिका तत्र उपस्थिता । गृहगोधिकायाः ग्रहणाय कश्चन मार्जारः तत्र आगतवान् । तावता शुनकसहितः कश्चन सैनिकः तत्र आगतः । स च शुनकः मार्जारस्य उपरि अभ्यपतत् । स च मार्जारः कस्यचित् वणिजः आसीत् । सः वणिक् स्वस्य मार्जारस्य उपरि अभिपतितं शुनकं प्रहर्तुम् उद्युक्तः । तदा तस्य संहाराय सैनिकः खड्गम् आकृष्टवान् ।

अत्रान्तरे गृहगोधिका मधुमक्षिकाम् अखादत् । गृहगोधिकां मार्जारः अगिलत् । मार्जारं शुनकः अमारयत् । वणिक् दण्डेन शुनकं प्राहरत् । सैनिकः वणिजः शिरसः छेदनम् अकरोत् । एतद्विरुध्य जनाः क्रोधं प्राकटयन् । जनानां निग्रहाय राजा सैन्यं प्रेषयितुम् उद्युक्तः ।

तदा मन्त्री तम् अवदत् - ''महाराज ! यत् प्रवर्तेत तत् प्रवृत्तम् । मधुपानाय मधुमक्षिकायाः आगमनं, गृहगोधिकया कृतं मधुमक्षिकाग्रहणं, माजरिण कृतं गृहगोधिकाभक्षणम् इत्यादयः निसर्गसहजाः । किन्तु सैनिकस्य व्यवहारः असहजः । सः वणिक् तु सज्जनः आसीत् । अतः जनाः सैनिकस्य विरोधं कृतवन्तः । भवान् क्रोधकारणतः इदानीं सैन्यस्य प्रेषणे उद्युक्तः अस्ति । क्रोधः न हि सहजः गुणः । सः मानवं दानवं करोति । क्रोधस्य परिणामः भवति नितरां घोरः'' इति ।

मन्त्रिणः वचनस्य युक्तताम् अवगच्छन् राजा क्रोधम् उपसंहृतवान् ।

*(आधारः - ऋषभवसुभागस्य पञ्चतन्त्रस्य कथा)*





# भयङ्करः खातः

## १४

*[अरण्ये केशवादिभिः अङ्गरक्षकसहितः ब्रह्मदण्डी मान्त्रिकः आगच्छन् अवलोकितः । तैः ब्रह्मदण्डी युक्त्या एव वृक्षशाखायां बद्धः, तस्य अश्वः गृहीतः च । केशवादयः अश्वारूढाः भूत्वा पलायितवन्तः । ग्रामजनाः तेषाम् अन्वेषणाय प्रस्थितवन्तः । अरण्यवासिनां नायकः तेभ्यः अभयं दत्त्वा, गुहायां सुरक्षितस्थानं प्रति तान् नीतवान् । तदनन्तरम्... ]*

केशवः, जयमल्लः, वृद्धः, वनवासिनायकः च घण्टां यावत् चलित्वा तत्र प्राप्तवन्तः, यत्र अन्धकारे कोऽपि मार्गः न दृश्यते स्म । मार्गम् अलभमानः नायकः गुल्मलतादिकम् अपसारयन् मार्गं कल्पयन् च अग्रे गच्छन् आसीत् । ते त्रयः तम् अनुसरन्तः आसन् । वयं के इति एतेन नायकेन यदि ज्ञायेत तर्हि एषः अस्मान् गृहीत्वा सैनिकेभ्यः समर्पयेत् इति संशयः तान् त्रीन् अपि बाधते स्म ।

'इदानीं ब्रह्मदण्डिनः अपायपरिधेः बहिः आगतम् अस्ति अस्माभिः त्रिभिः अपि । अतः अश्वम् आरुह्य इतः पलायनम् एव वरम्' इति अचिन्तयत् वृद्धः ।

सः केशवं जयमल्लं च तम् एव अभिप्रायं सूचितवान् । किन्तु ताभ्याम् एतत् उचितं न अमन्यत ।

''एतस्मिन् अन्धकारे अस्माकं यात्रा कस्यां दिशि इति न जानीमः चेत् ब्रह्मपुरसमीपम्



एव गच्छेम । तदा विपदः एव सम्मुखीकरणं भविष्यति'' इति केशवेन उक्तम् ।

''अर्धराज्यप्राप्तेः लोभेन एतेन वनवासिना एव द्रोहः यदि चिन्त्येत तर्हि किं वा कुर्याम वयम् ?'' इति अवदत् वृद्धः मन्दस्वरेण ।

तदा केशवः कोशस्थं खड्गम् अङ्गुल्या सूचितवान् । जयमल्लः तूणीरतः बाणं निष्कास्य पूर्ववत् एव स्थापितवान् । पुत्रस्य तन्मित्रस्य च बुद्धिमत्तां, साहसप्रवृत्तिं च ज्ञात्वा वृद्धः मनसि एव हर्षम् अन्वभवत् । 'एतस्मिन् वार्धक्ये ताडनेन मारणेन वा अहं मृतः भवेयं चेदपि अयं मम पुत्रः आपदः, क्लेशान् च सफलतया सम्मुखीकृत्य जीवनं करिष्यति' इति वृद्धस्य विश्वासः दृढः अभवत् ।

सर्वाग्रे वनवासिनायकः गच्छन् कस्यचित् महावृक्षस्य अधः स्थितवान् । सः स्वशूलेन वृक्षस्य काण्डे त्रिवारं ताडनं कृत्वा ध्वनिम् उत्पादितवान् ।

अनुक्षणं वृक्षस्य पृष्ठभागात् शब्दः श्रुतः - ''कः भवान् ? तिष्ठतु'' इति ।

नायकः शूलम् उन्नीय 'महाजङ्गमः' इति द्विवारम् उच्चैः अवदत् । ततः शीघ्रमेव उभौ युवकौ वेगेन आगत्य - ''महाजङ्गमप्रभो ! कः आदेशः अस्माकम् ?'' इति उक्त्वा विनम्रभावेन स्थितवन्तौ ।

''एते त्रयः अपि यात्रिकाः लुण्ठाकेभ्यः भीताः सन्तः अस्मान् शरणं गताः सन्ति । श्वः प्रातःकालपर्यन्तम् एतेषां रक्षणदायित्वम् अस्माकम् अस्ति । भवन्तु पञ्चषाः पर्वतमूलं गच्छन्तु । यतः तत्र ग्रामीणान् विरुद्ध्य अस्मदीयाः युद्ध्यमानाः सन्ति । तत्र किं प्रवृत्तम् इति ज्ञात्वा आगच्छन्तु इत्यपि तान् सूचयतु'' इति उक्तवान् महाजङ्गमः ।

नायकस्य एतम् आदेशं श्रुत्वा तयोः एकतरः वृक्षस्य पृष्ठभागं प्रति धावितवान्, अपरः च केशवादीनां हस्तं गृहीत्वा निकटे स्थितायाः गुहायाः दिशि प्रस्थितवान् ।

केशवः जयमल्लः च सस्यलतादिभिः आवृतां गुहां प्राप्तवन्तौ । वनवासिभिः यत् दत्तं तत् खादितं ताभ्याम् ।

हरिणादिमांसभक्षणसुखम् एतेषाम् अत्र । अपरत्र तु ब्रह्मदण्डी बुभुक्षया अपमानेन च ज्वलन् ग्रामजनान् बहुधा निन्दन् आसीत् । तस्य दुःस्थितिः वर्णनातीता आसीत् ।

''विद्रोहिणाम् आश्रयः तु कल्पितः एव । न केवलं तावत्, राजदूतान् अस्मान् मारयितुम् अरण्यमार्गे ते नियोजिताः अपि ! एतस्मिन्

ग्रामे विद्यमानान् वृद्ध-स्त्री-बाल-पुरुषादीन् सर्वान् अहं भस्मीभूतान् करिष्यामि'' इति वदन् मन्त्रपठनम् आरब्धवान् - ''हूँ हँ फट्... कालभैरव !'' इति । ब्रह्मदण्डिनः मन्त्रपठनं दृष्ट्वा सर्वे चीत्कुर्वन्तः अरण्यतः ग्रामदिशि धावितवन्तः । तेषां हस्ते विद्यमानायाः दीपशिखायाः प्रकाशे केचन खञ्जन्तः आगच्छन्तः दृष्टाः । तेषु केचन व्रणिताः, अन्ये केचन व्रणितान् गृहीत्वा आनयन्तः च आसन् ।

''कुत्र सन्ति ते विश्वासघातकाः ?'' इति उच्चैः अपृच्छत् ब्रह्मदण्डी । तस्य अङ्गरक्षकौ अन्यैः कैश्चित् सह धावतां ग्रामजनानां दिशि धावितवन्तौ । किन्तु ये धावन्ति स्म तेषु ग्रामयुवकाः एव अधिकाः आसन् । सर्वेषां मुखेषु प्रयासशतेन वा प्राणाः रक्षणीयाः इति भावः स्फुटं प्रतीयते स्म । सर्वेऽपि व्रणिताः एव आसन् ।

''ते विद्रोहिणः किं पलायितवन्तः ?'' इति पृष्टवन्तौ जितवर्मा शक्तिवर्मा च ।

''ते न केवलं पलायितवन्तः, अपि तु अस्माकम् उपरि आक्रमणाय वनवासिनः सम्प्रेरितवन्तः अपि । अर्धराज्यस्य अपेक्षा अपि नास्ति अस्माकम् इदानीम् । अस्मदीयाः केचन हताः अपि तैः । भवद्भ्यः भवताम् अर्धराज्याय च भूयांसि नमांसि'' इति अवदन् ग्रामयुवकाः ।

तावति काले ब्रह्मदण्डी तत्र उपस्थितः । केशवः, जयमल्लः, वृद्धः च वेषपरिवर्तनं कृत्वा अस्मान् वञ्चयित्वा धावितवन्तः इति ज्ञातवतः तस्य आक्रोशस्य कापि मितिः एव न आसीत् ।



''भवन्तः ग्रामीणाः एवं भीरवः सन्ति इति न जानामि स्म अहम् । असङ्ख्याकाः भवन्तः त्रीन् विद्रोहिणः ग्रहीतुं न शक्तवन्तः इति तु महते आश्चर्याय'' इति उच्चैः तान् अतर्जयत् ब्रह्मदण्डी ।

ततः सः जितवर्माणं, शक्तिवर्माणं च उद्दिश्य - ''जितवर्मन्, शक्तिवर्मन् ! भवन्तौ अविलम्बेन एव प्रस्थाय अत्र यत् प्रवृत्तं तत् सर्वं महाराजं राजगुरुं च सूचयताम् । ते त्रयः विश्वासघातकाः न ग्रहीष्यन्ते चेत् विन्ध्याचलप्राप्तितः पूर्वम् एव वयं हताः भवेम'' इति अवदत् ।

जितवर्मा, शक्तिवर्मा च परस्परं मुखं दृष्टवन्तौ । तयोः उभयोः अपि भीतिः आसीत् यत् यदि गमनावसरे ते आवां गृह्णीयुः तर्हि का गतिः भवेत् आवयोः ?' इति । तौ

चिन्तारतौ जातौ ।

तयोः अन्तरङ्गं विज्ञाय ब्रह्मदण्डी हुङ्कार-पुरस्सरम् उक्तवान् - ''भवन्तौ मम अङ्गरक्षकौ स्तः । भवतोः विश्वस्य विन्ध्याचलं प्रति यदि प्रस्थानं कुर्याम्, तर्हि मम प्राणपक्षी भूतपञ्चके विलीनः भवेत्'' इति ।

''अन्यथा न चिन्त्यताम् आर्य ! एतद्विषये राजगुरुमहाराजयोः त्वरया सूचनम् आवश्यकं किम् इत्यत्र पुनश्चिन्तनं वरम् इति आवयोः आशयः'' इति अवदत् जितवर्मा ।

''किमर्थं नास्ति तावती आवश्यकता ? तान् त्रीन् स्वच्छन्दं भ्रमणार्थं त्यजामः चेत् वयं कथं प्राप्नुयाम विन्ध्याचलम् ? ते सैनिकानाम् अपेक्षया क्रियाशीलाः, कार्य-कुशलाः, साहसिनः च इत्यत्र नास्ति सन्देहः । अस्माकम् अग्रिमा योजना तैः ज्ञाता अस्ति । अतः ते यदाकदाचिदपि अस्मान् हत्वा भयङ्करखातस्य निधेः स्वामित्वं सम्पादयितुं यतेरन् । पश्यत्सु एव अस्मासु तैः अस्माकम् अश्वाः अपहृताः । एतत्सर्वं राजगुरुं सूचयामः चेत् सः तेषां बन्धनं कारयेत् खलु अवश्यम् ? एतत् कार्यं यावच्छीघ्रं सम्भवेत् तावान् लाभः अधिकः'' इति अवदत् ब्रह्मदण्डी ।

धनाशां प्रदर्श्य पञ्चषाणां ग्रामयुवकानां ग्रहणे कथञ्चित् सफलौ जातौ जितवर्म-शक्तिवर्माणौ । तैः ग्राम्ययुवकैः सह तौ ब्रह्मपुरं प्रति प्रस्थानं कृतवन्तौ । तैः यावत् किञ्चिद्दूरं गतं तावता एव ब्रह्मदण्डी धावन् तेषां समीपम् आगत्य जितवर्मणः स्कन्धे हस्तं संस्थाप्य उक्तवान् - ''जितवर्मन् ! भवान् शक्तिवर्मणा सह इतः गच्छति चेत् अहम् अत्र एकाकी भविष्यामि । भवतोः अनुपस्थितिं ज्ञात्वा ते मम शिरश्छेदं कुर्वन्ति चेत् का गतिः भवेत् मम ? अतः भवान् अत्रैव तिष्ठतु, शक्तिवर्मा



गच्छतु नाम ब्रह्मपुरं प्रति'' इति ।

जितवर्मा शक्तिवर्मा च परस्परं सम्भाषणं कृत्वा निर्णयं कृतवन्तौ यत् जितवर्मा ब्रह्मदण्डिना सह तिष्ठेत् इति । दशभिः ग्राम्यजनैः सह शक्तिवर्मा प्रस्थानं कृत्वा अनन्तरदिनस्य प्रातःकाले एव ब्रह्मपुरं प्राप्य राजगुरुणा मिलितवान् ।

कञ्चिदपि प्रसङ्गम् अविहाय प्रवृत्तं सर्वं राजगुरुं श्रावितवान् शक्तिवर्मा । राजगुरुः सर्वं सावधानेन मनसा श्रुत्वा – 'ते त्रयः अपि मम प्रयासं निरर्थकं कर्तुम् उद्युक्ताः सन्तः कण्टकायन्ते । भयङ्करखातस्य निधिं प्राप्तुम् इच्छन्ति ते । मान्त्रिकस्य संशयः समीचीनः एव । तस्य शिष्यः अपि किञ्चिदिव मन्त्रतन्त्रादिकं जानीयात् । ब्रह्मदण्डिनः समग्रं रहस्यम् अपि जानीयात् सः । अतः ते कथमपि ग्रहीतव्याः एव' इति निर्णीय सेनापतये वार्ता प्रेषितवान् – 'त्वरया आगन्तव्यम्' इति ।

अल्पे एव काले सेनापतिः राजगुरोः समक्षम् आगतवान् । तदा राजगुरुणा उक्तम् – ''अरण्ये ब्रह्मदण्डी मृत्युमुखं प्रविश्य बहिः आगतः इव । एतेन स्पष्टं यत् ते त्रयः दुष्टाः अस्मद्राज्यसीमायाम् एव सन्ति इति । सर्वासु दिक्षु अपि सैनिकाः प्रेष्यन्ताम् । तान् ग्रहीतुं सर्वविधाः अपि प्रयासाः भवन्तु । सीमासैनिकान् अपि जागरूकान् करोतु । तौ दुष्टौ क्षत्रियवेषेण, वृद्धः साधुपरिधानेन च भ्रमन्तः सन्ति । वृद्धेन मणिमालाः अपि धृताः सन्ति'' इति ।

सेनापतिः राजगुरोः अनुज्ञां प्राप्य निर्गतवान् । अविलम्बेन एव सैनिकाः गणशः



विभक्ताः सन्तः अरण्यशोधनं कर्तुं प्रस्थिताः । प्रतिसमूहम् अपि विंशतिः सैनिकाः आसन् । सेनापतिः आत्मना सह पञ्चविंशतिं सैनिकान् नीतवान् तान् द्रोहिणः ग्रहीतुम् ।

रात्रौ यत्र वासः कृतः आसीत् तस्याः गुहायाः बहिः आगत्य वृक्षच्छायायाम् उपविष्टवन्तः केशवः, जयमल्लः, वृद्धः च । तेषां त्रयाणां पुरतः सिंहचर्मणा आच्छन्नायाः पीठिकायाः उपरि महाजङ्गमः उपविष्टः आसीत् । केशवादयः स्वयात्राम् अधिकृत्य सम्भाषणं कुर्वन्तः आसन् ।

तावता वृक्षाणां मध्यतः उभौ वनवासियुवकौ व्याकुलौ सन्तौ तत्र आगतवन्तौ । महाजङ्गमः आश्चर्येण तौ पश्यन् पृष्टवान् – ''किं प्रवृत्तम् ?'' इति ।

आगतौ तौ युवकौ केशवं जयमल्लं च

संशयदृष्ट्या दृष्ट्वा - ''प्रभो ! किञ्चित् एकान्ते निवेदनीयम् अस्ति'' इति उक्तवन्तौ । एतत् श्रुत्वा महाजङ्गमः पीठिकातः उत्थाय तयोः समीपं गत्वा ताभ्याम् उक्तम् अशृणोत् । ततः केशवादीन् सकृत् तीक्ष्णदृष्ट्या दृष्ट्वा शिरः कम्पयन् तेषां निकटम् आगन्तुम् उद्युक्तः अभवत् ।

'कापि आपत् आपतन्ती अस्ति' इति ज्ञातवान् केशवः । तावता जयमल्लः वृद्धः च कोषात् खड्गं निस्सारयितुं सिद्धौ अभवताम् । एतत्सर्वं विलोक्य महाजङ्गमः मृदु हसन् - ''भवतां साहसं श्लाघनम् अर्हति । भवतां वास्तविकी स्थितिः अवगता मया । ब्रह्मपुरस्य सेना भवतः त्रीन् अन्वेष्टुम् उद्युक्ता अस्ति । भवन्तः न हि क्षत्रियाः, न वा साधारणाः यात्रिकाः । राजद्रोहिणः भवन्तः राज्ञः शत्रवः एव'' इति उक्तवान् ।

''अर्धराज्यं प्राप्येत इति लालसया भवान् शरणागतान् अस्मान् किं शत्रुहस्तगतान् कुर्यात् ?'' इति अपृच्छत् केशवः ।

तदा महाजङ्गमः उच्चैः हसन् उक्तवान् - ''अर्धराज्यं किं, समग्रं ब्रह्मपुरं दीयेत चेदपि अहं तत् स्वीकर्तुं सर्वथा न सिद्धः । मम का आवश्यकता राज्यस्य ? एतत् अरण्यम् एव मम राज्यम् । अस्माकं वनवासिनः एव मम प्रजाः । भवन्तः सत्वरं वनवासिवेषं धरन्तु । अस्मदीयाः भवतः त्रीन् अपि राज्यसीमातः बहिः प्रापयिष्यन्ति'' इति ।

नायकस्य अयं निर्णयः तेषां सन्तोषाय अभवत् । तैः महाजङ्गमाय धन्यवादाः समर्पिताः । तेन दत्तं हरिणचर्मवेषं धृत्वा शिरसि द्वित्राणि पिच्छानि योजयित्वा ते स्ववस्त्राणि बन्धरूपेण बद्ध्वा स्कन्धे आरोप्य ततः प्रस्थितवन्तः ।

महाजङ्गमः वनवासियुवकौ आहूय अवदत् - ''प्रथमम् अरण्यमार्गेषु अश्वान् सवेगं धावयन्तु । तदनन्तरम् एतान् अस्मदतिथीन् राज्यसीमातः बहिः प्रापयन्तु । प्राणान् पणीकृत्य एतत् कार्यं साधनीयम्'' इति ।

एतत् अङ्गीकृत्य तौ युवकौ अश्वान् ततः प्रेषितवन्तौ । अरण्यवेषं धृतवन्तः केशवः जयमल्लः वृद्धः च सीमाम् उल्लङ्घ्य बहिर्गन्तुम् इच्छन्तः ततः ताभ्यां सह प्रस्थितवन्तः ।

- *(अनुवर्तते)*



वेताल-कथा

# श्रेष्ठतरं सौन्दर्यम् ।

सङ्कल्पितं यावत् साधितं न भवेत् तावत् निद्राहारादिकम् अपि न स्वीकरोमि इति निर्णयं कृतवान् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनेन यथापूर्वं श्मशानदिशि प्रस्थितवान् । तदा शवस्थः वेतालः - ''महाराज ! लक्ष्य-साधनार्थं कार्ये श्रद्धा, निरन्तरः परिश्रमः च आवश्यकः । एतत् उभयम् अपि भवति प्रभूतं दृश्यते । किन्तु मानवस्य परिश्रमः तदा एव सार्थकः भवति यदा भाग्यम् अपि अनुकूलकरं भवेत् । भाग्यस्य आनुकूल्यम् अस्ति चेदेव लक्ष्यप्राप्तिः अपि भवेत् । आश्चर्यं नाम केचन दैवे अनुकूले सत्यपि, सफलतायां हस्त-



गतायाम् अपि अविवेकेन व्यवहृत्य फल-प्राप्तितः वञ्चिताः भवन्ति । एतद्विषये भवन्तं जागरूकं कर्तुम् अहं कस्यचित् कृषिक-युवकस्य कथां श्रावयामि । श्रूयातां सावधानेन मनसा'' इति उक्त्वा कथाम् आरब्धवान् -

साकेतपुरी भूस्वामिनः आधीन्ये स्थितः कश्चन ग्रामः । तस्मिन् ग्रामे दिलीपः नाम कश्चन सम्पन्नकृषकस्य पुत्रः आसीत् । पितुः वृत्तौ तस्य आसक्तिः न आसीत् । किन्तु हस्तकलासु तस्य विशेषज्ञानम् । सकृत् वीक्षणं क्रियते चेत् तत् ज्ञातं भवति स्म तेन । तादृशः सकृद्ग्राही सः मृदा अपि उत्तमाः मूर्तीः रूपयति स्म । तस्य हस्तं गतः वेणुखण्डः क्षणाभ्यन्तरे एव नादं करोति स्म ।

किञ्चन सुन्दरं प्राकृतिकं दृश्यम् अव-लोकितं चेत् तस्य प्रतिरूपं यावत् न अङ्क्यते तावत् भोजनम् अपि न स्मर्यते स्म तेन । एकलव्यः इव स्वयम् एव सः एतादृशं कौशलम् आत्मसात् कृतवान् आसीत् ।

अथ कदाचित् साकेतपुर्याः भूस्वामिना निश्चितं यत् पुत्र्याः मणिमालायाः अष्टादशः जन्मदिनोत्सवः महता वैभवेन आचरणीयः इति । तदर्थं सज्जता अपि आरब्धा । भूस्वामी घोषणां कारितवान् यत् एतस्मिन् मङ्गलावसरे सर्वैः उपस्थाय पुत्र्याः श्रेयः आशंसनीयम् इति । साकेतपुरीवासिनः दिलीपं निवेदितवन्तः यत् एतस्मिन् अवसरे मणिमालायाः कृते अपूर्वं कलाखण्डं निर्माय उपायनरूपेण ददातु, तत् च उपायनं सर्वोत्तमम्, अत्याकर्षकं च भवेत् इति ।

तादृशम् उपायनं किं भवितुम् अर्हति इति बहुकालं चिन्तयित्वा दिलीपः निर्णीतवान् यत् रक्तचन्दनेन सिंहासनं निर्माय समर्पयामि इति । तदनन्तरदिने एव सः रक्तचन्दनदारूणि आनायितवान् । सिंहासनस्य हस्तौ राजहंस-पक्षाकृत्या, पादाः च नृत्यभङ्गीयुक्तानां हरिणानाम् आकृत्या च उत्कीर्णाः तेन । ऊर्ध्व-भागे मणयः तेन संयोजिताः । सुन्दरीणां लतानां वेष्टनम् अपि चित्रितम् । सिंहासनस्य सज्जीकरणानन्तरम् अवशिष्टेन काष्ठेन सुन्दर्याः ललनायाः काचित् मूर्तिः अपि तेन निर्मिता । एषा मूर्तिः अत्यन्तम् आकर्षिका सती द्रष्टॄणां चित्तं हरति स्म । अतः दिलीपः तां स्वस्य कृते एव रक्षितवान् । शाटिका-वेष्टनेन, आभूषणधारणेन, ललाटे तिलकस्य धारणेन च तां मूर्तिम् अलङ्कृतवान् सः ।

चन्दनसिंहासनं मूर्तिं च दृष्ट्वा जनाः

दिलीपस्य श्लाघनं बहुधा कृतवन्तः । मणिमालायाः जन्मदिने उपायनरूपेण सिंहासनं समार्पयत् दिलीपः । चित्ताकर्षकं तत् सिंहासनं प्राप्य मणिमाला नितरां सन्तुष्टा भूत्वा - "एतस्य निर्मातारं कलाकारम् अहं द्रष्टुम् इच्छामि" इति पितरम् अवदत् । भूस्वामिना दिलीपः आनायितः ।

दिलीपः आत्मना सह तां चन्दनमूर्तिम् अपि आनीतवान् आसीत् । मणिमालायै सा मूर्तिः अपि नितराम् अरोचत । कलाकारः दिलीपः तया बहुधा प्रशंसितः ।

तदनन्तरं सा पितरम् उक्तवती - "तात ! सा मूर्तिः मह्यम् आवश्यकी" इति ।

"आर्य ! कृपया क्षन्तव्यः अहम् । मदर्थम् एव एषा कलाकृतिः निर्मिता मया, न तु परस्मै दातुम्" इति निस्सङ्कोचतया अवदत् दिलीपः ।

"एतस्याः मूर्तेः मूल्यं कियत् इति भवान् वदतु । ततोऽपि अधिकम् एव अहं दास्यामि । किन्तु एषा न विक्रीयते इति तु न वक्तव्यम्" इति अवदत् भूस्वामी ।

"महाशय ! एषा मूर्तिः मम प्राण-समाना अस्ति । अतः कस्मैचिदपि न दीयते मया एषा" इति दृढस्वरेण उक्तवान् दिलीपः ।

"निष्प्राणा एषा पाञ्चालिका भवतः प्राणायते किम् ? यदि भवान् इच्छेत् तर्हि अहम् एव भवदीया भवेयम् । एतां पाञ्चालिकां मम हस्तगतां करोतु, मां च परिणयतु" इति अवदत् मणिमाला । सा दिलीपे अनुरागवती आसीत् ।

"एषा मूर्तिः मम काल्पनिकसुन्दर्याः प्रतिरूपम् । मया एतादृश्याः एव अन्वेषणं



क्रियमाणम् अस्ति । अतः भवत्याः अपेक्षां पूरयितुम् अशक्तं मां क्षाम्यतु कृपया भवती" इति दिलीपः अवदत् विनयेन ।

तस्य एतादृशेन व्यवहारेण मणिमालायाः अहम्भावः आघातितः जातः । तथापि सा स्वस्य क्रोधस्य अभिव्यञ्जनम् अकृत्वा पितरम् अपश्यत् ।

भूस्वामी पुत्र्याः मनोगतं ज्ञात्वा दिलीपम् अवदत् - "भवान् अद्वितीयः कलाकारः इत्यत्र नास्ति संशयलेशः अपि । अतः आदौ सहार्दम् अभिनन्दामि भवन्तम् । भवतः कृते षाण्मासिकम् अवधिं कल्पयन् अस्मि । तावति काले भवतः सा काल्पनिकसुन्दरी प्राप्येत । अन्यथा एतां पाञ्चालिकां मम पुत्र्यै समर्प्य तस्याः कथनानुगुणं व्यवहरणीयं भविष्यति भवता । एतत् उभयम् अपि कर्तुं भवान् न



शक्ष्यति चेत् मदधीनक्षेत्रात् भवन्तं बहिर्भूतं करिष्यामि'' इति ।

''भवतु नाम'' इति उक्त्वा दिलीपः स्वकल्पनासुन्दर्याः अन्वेषणार्थं ततः निर्गतवान् । ग्रामं ग्रामं गत्वा बहुधा अन्विष्टं चेदपि तेन तादृशी न कापि दृष्टा, यादृशी तस्य मनसि आसीत् । निराशः सः श्रान्तः भूत्वा चण्डातपे अरण्ये गच्छन् बुभुक्षया शक्तिहीनतां प्राप्य निस्संज्ञः भूत्वा मार्गे एव न्यपतत् । संज्ञां प्राप्य यदा नेत्रोन्मीलनं कृतं तदा सः ज्ञातवान् यत् अहं कस्मिंश्चित् कुटीरे अस्मि इति । शिरः उन्नमय्य सः परितः दृष्टिं प्रासारयत् ।

तस्य पुरतः काचित् सामान्यरूपवती वनकन्या स्थितवती आसीत् । नेत्रोन्मीलनं कृतवते दिलीपाय जलं दत्त्वा सा - ''अरण्ये संज्ञाशून्यः पतितः भवान् दृष्टः अस्माभिः । पर्वतदेव्याः कृपया इदमिदानीम् एव ससंज्ञः जातः अस्ति भवान् । वनजम्बीरस्य जलं मधुमिश्रितं पानीयं च परिणामकारि जातम् इति भासते । तिष्ठतु तावत् । एषाहं पितरम् आह्वयामि'' इति उक्त्वा ततः अधावत् ।

अरण्ये मूलकौषधेन चिकित्सां कुर्वतः वैद्यस्य पुत्री एव सा । तस्याः नाम मङ्गला इति । पुत्र्या सह कुटीरं प्रविश्य तस्याः पिता पुनः दिलीपस्य नाडीं परीक्ष्य - ''महाशय ! भवान् बलहीनः सञ्जातः अस्ति । इतोऽपि चत्वारि दिनानि यावत् अत्रैव वसन् भवान् विश्रान्तिं प्राप्नोतु । एषा मम पुत्री मङ्गला भवतः सेवां करिष्यति'' इति उक्तवान् ।

चत्वारि दिनानि तत्र वासम् अङ्गीकृतवान् दिलीपः । तेषु दिनेषु मङ्गलायाः सर्वान् व्यवहारान् सूक्ष्मतया अवालोकयत् दिलीपः ।

कदाचित् व्याघ्रः कश्चित् व्याधस्य बाणतः कथञ्चित् आत्मानं रक्षित्वा व्रणितः अभवत् । तस्य पादे जातात् व्रणात् रक्तं स्रवति स्म । मङ्गला व्याघ्रस्य चिकित्सां कृत्वा व्रणस्य उपरि औषधलेपनं कृत्वा पट्टिकां बद्धवती ।

एतत् लक्षितवान् दिलीपः - ''एषः क्रूरः मृगः खादेत् इति भीतिः भवत्याः किं नास्ति ?'' इति अपृच्छत् महता आश्चर्येण ।

''न कापि भीतिः मम । एषः क्रूरः इति तु सत्यम् एव । किन्तु बुभुक्षा यदा भवति तदा एव व्याघ्रादयः आक्रमणं कुर्वन्ति । अस्माकं नेत्रयोः दया प्रेम वा दृष्टं चेत् ते हानिं न कुर्वन्ति'' इति हसन्ती अवदत् मङ्गला ।

औषधपत्रपेषण-कषायसज्जीकरणादिभिः पितुः साहाय्यं कुर्वती सा गृहकार्याणि अपि

सम्यक् एव निर्वहति स्म । सा गीतगानपुरस्सरं स्वकण्ठमाधुर्यम् अपि प्रसारयति स्म । यत्र साहाय्यस्य आवश्यकता प्रतीयते तत्र शीघ्रम् एव उपस्थिता भवति स्म सा ।

चतुर्थे दिने ततः निर्गमनसमये दिलीपः प्राणसमानां मूर्तिं तस्यै यच्छन् उक्तवान् - "भवत्या कृतं साहाय्यं कदापि विस्मर्तुं न शक्नोमि । अतः कृतज्ञतारूपेण अहम् एतां मूर्तिं भवत्यै ददत् अस्मि । कृपया स्वीक्रियताम्" इति ।

"नैव, मम हार्दिकी इच्छा अस्ति - भवान् अपि पाञ्चालिकासदृशीं सुन्दरीं पत्नीं प्राप्नुयात्, सकुशलं गृहं प्राप्नुयात् च इति" इति वदन्ती मूर्तिस्वीकरणं निराकृत्य मधुना पूर्णं चर्मस्यूतं तस्मै समर्पितवती मङ्गला ।



"न केवलं भवत्या दीयमानं मधु, अपि तु भवत्याः हृदयम् अपि माधुर्येण पूर्णम् अस्ति । तादृशं भवत्याः हृदयं स्वायत्तीकर्तुम् इच्छामि" इति हृद्गतं भावं सधैर्यम् उक्तवान् दिलीपः ।

मङ्गला लज्जया अवनतशिरस्का भूत्वा कुटीरस्य अन्तः गतवती । ततः सप्ताहाभ्यन्तरे मङ्गलायाः पिता तयोः विवाहं निर्वर्त्य पुत्रीं दिलीपेन सह प्रेषितवान् ।

सपत्नीकः दिलीपः ततः साकेतपुरीं गत्वा भूस्वामिनः सम्मुखे उपस्थाय उक्तवान् - "आर्य ! भवतः पुत्री एतां मूर्तिम् इष्टवती आसीत् खलु । कृपया स्वीक्रियताम्" इति ।

तदा भूस्वामी पृष्टवान् - "एतस्य मूल्यं कियत् ?" इति ।

"मया प्रतिफलापेक्षया दीयमानं न एतत् । उपायनत्वेन एव यच्छन् अस्मि" इति दिलीपः सविनयं निवेदितवान् ।

तस्मिन् एव समये भूस्वामिनः पुत्री मणिमाला तत्र आगतवती । "किम् एषा व्याधपुत्री एव भवतः काल्पनिकसुन्दरी ? पाञ्चालिकायां विद्यमानस्य सौन्दर्यस्य लेशः अपि एतस्यां नास्ति । मम यावत् सौन्दर्यं ततोऽपि अधिकं सौन्दर्यम् एतस्याम् अस्ति किम् ?" इति उक्त्वा सा पितरम् उद्दिश्य उक्तवती - "तात ! एषः दिलीपः पराजयं प्राप्तवान् अस्ति । अतः इतः पाञ्चालिकां स्वीकृत्य एतस्मै घोरं दण्डनं विदधातु" इति ।

भूस्वामी सकृत् पुत्रीं दृष्ट्वा ततः दिलीपम् उद्दिश्य - "दिलीप ! क्षन्तव्यः अहम् । मम पुत्र्या यत् अनुचितम् उक्तं ततः अहं नितरां लज्जे । स्वीक्रियन्ताम् एतानि सहस्रं सुवर्ण-

नाणकानि । भवतः विवाहं निमित्तीकृत्य उपायनरूपेण दीयमानम् अस्ति एतत्, न तु पाञ्चालिकायाः मूल्यत्वेन'' इति अवदत् ।

दिलीपः उपायनं स्वीकृत्य भूस्वामिनं प्रणम्य पत्न्या मङ्गलया सह स्वगृहं गतवान् ।

एवं कथां श्रावयित्वा वेतालः उक्तवान् – ''राजन् ! पाञ्चालिकाव्यामोहमात्रेण एव दिलीपः भूस्वामिनः पुत्रीं, तस्य अपारां सम्पदं च निराकृतवान् । अन्ततो गत्वा असुन्दरी, सम्पद्रहिता च काननकन्या परिणीता तेन । एतत् सर्वं तस्य अज्ञानम् एव खलु द्योतयति ? मङ्गलां परिणीतवता तेन साक्षात् स्वग्रामं प्रति गमनं परित्यज्य भूस्वामिनः गृहं प्रति किमर्थं गतम् ? यदि भूस्वामी तस्मै घोरं दण्डनं विहितवान् स्यात् तर्हि मङ्गलायाः विषये अन्याय्यं खलु आचरितम् अभविष्यत् ? भूस्वामी न केवलं दिलीपं क्षान्तवान्, अपि तु उपायनरूपेण द्रव्यराशिम् एव दत्त्वा सत्कृतवान् । एतत् किमर्थम् ? एतेषां मम प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः राजा अवदत् – ''दिलीपः कुशलः कलाकारः, वस्तुस्थितिग्राही चापि । केवलेन बाह्यसौन्दर्येण न किमपि प्रयोजनम् । तेन सह आन्तरिकं सौन्दर्यम् अपि भवेत् । बाह्यं सौन्दर्यं भवेत्, न भवेत् वा, तथापि आन्तरं सौन्दर्यं तु स्यात् एव । मङ्गलायां तदेव दृष्टं दिलीपेन । अतः एव सः तस्याः परिणये मतिं कृतवान् । प्रेम्णा आदरेण च पूर्णं हृदयं बाह्यसौन्दर्यम् अतिशेते । यः अन्येषु आदरवान् न भवति, यस्मिन् च दर्पादिकं अधिकं सः मानवत्वेन परिगणयितुम् अयोग्यः एव । मणिमाला एव अत्र उदाहरणम् । पाञ्चालिकायां स्थितं सौन्दर्यं न हि श्रेष्ठम् इति यदा दिलीपेन ज्ञातं तदा सः तां मणिमालायै निश्शुल्कं दातुम् उद्युक्तः अभवत् । अत्र कारणं तस्य अविवेकः अज्ञानं वा न । भूस्वामिना सः मिलितः यत् तत् तु तस्य निष्कपटतां द्योतयति । अतः भूस्वामिनः अपि भ्रान्तिः अपगता । तेन दिलीपः ससन्तोषं क्षान्तः अपि'' इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः इति कारणेन वेतालः ततः शवसहिततया अदृश्यः भूत्वा वृक्षशाखायां लम्बमानः अभवत् ।






# अद्वितीयं वास्तुकौशलम्



आग्रादुर्गं मोगलवंशीयानां शासकानां वैभवस्य प्रतीकम् अस्ति । तेषां शासनस्य उत्तुङ्गस्थितौ चक्रवर्ती शाहजहानः १६३८-१६४८ वर्षयोः मध्ये दुर्गम् एतत् निर्मितवान् । दुर्गं परितः रक्षणदृष्ट्या महाप्राकारद्वयं श्वेतशिलया निर्मितम् । बाह्यप्राकारः ७० पदमितः, अपरः च ३० पदमितः । तयोः मध्ये खाते मकराः भवन्ति, खातप्राकारयोः मध्ये विद्यमाने स्थले व्याघ्राः च भवन्ति स्म । 'दीवान्-इ-आम्' नामके सभागृहे चक्रवर्ती जनसन्दर्शनं करोति स्म । कृष्णशिलया निर्मिते सिंहासने सः उपविशति स्म तत्र । विशिष्टानां जनानां मेलनाय 'दीवान्-ई-खास' नामकं सभागारम् आसीत्, यत्र श्वेतशिलासनं भवति स्म । मल्लिकासौधे आधिक्येन शाहजहानस्य प्रिया पत्नी मुमताजा वसति स्म, या च चतुर्दशं पुत्रं प्रसूय दिवं गता । तदनन्तरवर्षेषु शाहजहानः अत्रैव बन्दीकृतः । अन्तिमेषु दिनेषु च ततः एव यमुनातीरस्थं ताजभवनं पश्यन् सः कालं यापितवान् ।




# नूपुरस्य झणत्कारः

जयन्तः गङ्गापुरे भूस्वामिकार्यालये कार्यं करोति । सः उत्तमस्वभाववान् बुद्धिमान् च । तत्कारणतः उद्योगप्राप्तेः अनन्तरं स्वल्पे एव काले तेन उत्तमा ख्यातिः सम्पादिता आसीत् । तस्य मातापितरौ ललितपुरनामके ग्रामे निवसतः स्म । पुत्रेण यदा नगरे उद्योगः प्राप्तः तदा तौ ग्रामं परित्यज्य पुत्रेण सह वासम् आरब्धवन्तौ ।

नगरं प्रति आगमनस्य अनन्तरम् अपि जयन्तः ग्रामसम्पर्कं न त्यक्तवान् आसीत् । यदा अवसरः प्राप्यते तदा ग्रामं गत्वा मित्राणां गृहे निवसति स्म सः । ग्रामसम्बद्धाः सर्वाः वार्ताः सङ्गृह्यन्ते स्म तेन ।

कदाचित् दीपावलीपर्वनिमित्तं केषाञ्चित् दिनानां विरामः प्राप्तः तेन । अतः सः मित्रैः सह मेलनाय ललितपुरं गतवान् । ग्रामे महेन्द्रः, शिवदासः, गुणशेखरः, मनोहरः च तस्य आत्मीयाः सुहृदः । जयन्तस्य आगमनात् ते नितरां सन्तुष्टाः । तेषां गृहाणि परस्परं सम्बद्धानि आसन् । जयन्तः चत्वारि दिनानि ग्रामे वसति इत्यतः निर्णीतं यत् एकैकस्मिन् गृहे एकैकं दिनं वासः भवतु इति ।

प्रथमे दिने जयन्तः महेन्द्रस्य गृहम् अगच्छत् । रात्रौ भोजनानन्तरं तौ उभौ अपि बाल्यस्य दिनानि स्मरन्तौ कालं यापितवन्तौ । ग्रामस्य स्थितेः विषये, देशस्य राजनीतिविषये चापि ताभ्यां चर्चा कृता ।

शयनात् पूर्वं महेन्द्रः भक्त्या हनूमतः स्मरणं कृतवान्, राक्षोघ्नमन्त्रं रामरक्षास्तोत्रं च पठितवान् ।

तदा जयन्तः मन्दहासपूर्वकं तम् उक्तवान् – "दैवभक्तिः भवति विशेषतः प्रबुद्धा इति भाति । किं भवान् विरागी भवन् अस्ति ?" इति ।

"वैराग्यं न, भयं वर्धमानम् अस्ति । भयस्य निवारणाय एव एते उपायाः । हनूमतः

भयं निवृत्तं भवति इति श्रूयते । अतः एव एतत्सर्वं करोमि'' इति अवदत् महेन्द्रः ।

''किं भयं बाधते भवन्तम् ?'' इति अपृच्छत् जयन्तः ।

''सा च महती कथा । इदानीं तु मध्यरात्रः अतीतः । अतः शयनं करवाव'' इति उक्त्वा शयनं कृतवान् महेन्द्रः । जयन्तः अपि शयनं कृतवान् ।

मध्यरात्रसमये जयन्तेन जागरणं प्राप्तम् । तेन नूपुरस्य झणत्कारः कश्चन श्रुतः । जयन्तः मुखं परिवर्त्य अपश्यत् । महेन्द्रः आच्छादकेन आत्मानम् आच्छाद्य भयेन कम्पमानः मन्त्रं जपन् अस्ति । अल्पे एव काले नूपुरध्वनिः स्थगितः जातः ।

प्रातः महेन्द्रं नूपुरध्वनिविषये अपृच्छत् सः । तदा महेन्द्रः विषादेन अवदत् - ''भवता अपि किं सः ध्वनिः श्रुतः एव ? आ एकस्मात् मासात् मम गृहस्य परिसरे काचित् पिशाची इतस्ततः अटति । प्रतिदिनम् अपि रात्रौ एषा एव बाधा । कदाचित् चिन्तनं भवति - एतत् गृहं त्यजेयम् इति । किन्तु परम्परया प्राप्तस्य गृहस्य परित्यागे क्लेशः । परित्यक्तं चेत् अन्यत्र कुत्र वासः इत्यपि समस्या । पिशाचीतः मोक्षं प्राप्तुं मया भूतवैद्यः आश्रितः । दिग्बन्धनं अपि कारितम् । महान् च व्ययः अपि कृतः । किन्तु इतः किमपि प्रयोजनं न सिद्धम्'' इति ।

''अये, किं पिशाचपीडादिषु भवतः अपि विश्वासः ?'' इति अपृच्छत् जयन्तः ।

''मम विश्वासः अस्ति उत न इत्येतत् गौणम् । नूपुरस्य झणत्कारस्य श्रवणस्य आरम्भः यदा जातः ततः आरभ्य गृहे अशुभ-



परम्परा एव जायमाना अस्ति'' इति अवदत् महेन्द्रः ।

''एतद्विषये भवता मित्रैः सह चर्चा किं कृता ? तैः किं कोऽपि परिहारमार्गः न सूचितः ?'' इति अपृच्छत् जयन्तः ।

''तैः सह यदि अहं चर्चां कुर्यां तर्हि ते सर्वे मां भीरुं, मूढविश्वासेन ग्रस्तं, महामूर्खं वा भावयेयुः । मम उपहासं च कुर्युः बहुधा । अतः एव चर्चाकरणे भीतिः मम'' इति अवदत् महेन्द्रः ।

अनन्तरदिने जयन्तः शिवदासस्य गृहे अवसत् । तस्यां रात्रौ अपि तेन नूपुरझणत्कारः श्रुतः एव । अद्यतनः ध्वनिः पूर्वदिनात् अपि स्पष्टः आसीत् ।

अनन्तरदिने प्रातः जयन्तः यदा शिवदासम् एतद्विषये अपृच्छत् तदा शिवदासः अवदत् -



''उच्चैः मा वदतु एतद्विषये । मया मन्दिरस्य अर्चकः पृष्टः । सः वदति - 'महालक्ष्म्याः नूपुरध्वनिः सः । तस्याः प्रवेशे कोऽपि प्रतिबन्धः दृश्यते । विशेषपूजायाः कारणात् स च प्रतिबन्धः अपगतः भविष्यति' इति । अतः एव अहं गुप्तरूपेण पूजां कारयन् अस्मि । महाव्ययकरी अस्ति सा'' इति ।

जयन्तेन प्रतिवचनं किमपि न उक्तम् । तदा शिवदासः प्रार्थयत - ''एतं विषयम् अन्यं कमपि मा वदतु कृपया'' इति ।

जयन्तः तृतीयं दिनं गुणशेखरस्य गृहे अयापयत् । एतस्यां रात्रौ नूपुरध्वनिः समीपतः एव श्रुतः । गुणशेखरस्य जागरणं दृष्ट्वा जयन्तः अपृच्छत् - ''नूपुरस्य झणत्कारः श्रूयते खलु ?'' इति ।

''आम् । गतेभ्यः आ केभ्यश्चित् दिनेभ्यः श्रूयते एषः ध्वनिः । अस्माकं गृहस्य पृष्ठभागे निधिः अस्ति इति भाति । सः भूमितः बहिः आगन्तुम् इच्छति । अतः एव एतादृशः ध्वनिः श्रूयते । तस्य निधेः प्राप्तये मया गृहस्य पृष्ठभागे खननं कारितम् । किन्तु निधिः तु न प्राप्तः'' इति उक्त्वा - ''कृपया भवान् एतम् अंशम् अन्यान् मा वदतु'' इति निवेदितवान् गुणशेखरः ।

जयन्तः अवगतवान् यत् एतैः त्रिभिः अपि नूपुरस्य झणत्कारस्य विषये यत् उच्यते तत्र वास्तविकता नास्ति इति । 'एते त्रयः अपि स्वमत्यनुगुणं चिन्तयन्तः किमपि किमपि प्रकल्प्य वदन्तः सन्ति । वस्तुस्थितिं ज्ञातुम् एतैः प्रयासः एव न कृतः । विषयस्य गूढतां वर्धयन्तः एते आत्मानम् एव वञ्चयन्तः सन्ति' इति अचिन्तयत् सः ।

चतुर्थे दिने तेन मनोहरस्य गृहे स्थितम् । तस्यां रात्रौ तु सः नूपुरध्वनिः अतिनिकटात् एव श्रुतः तेन । यावत् जयन्तः उत्थाय अपश्यत् तावता मनोहरः उत्थाय पार्श्वस्थं प्रकोष्ठम् अगच्छत् । अनन्तरं नूपुरस्य झणत्कारः स्थगितः । मनोहरः प्रत्यागत्य विना शब्दं मञ्चे शयनम् अकरोत् ।

अनन्तरदिने प्रातः जयन्तः मनोहरं नूपुर-ध्वनिविषये यदा अपृच्छत् तदा मनोहरः अवदत् - ''सद्यः एव मम विवाहः जातः इति भवान् जानाति एव । मम पत्नी निद्रासञ्चाररोगेण युक्ता अस्ति । आरात्रि जागरणं प्राप्य तस्याः रक्षणं कर्तुं न शक्यं खलु ? अतः अहं तस्याः पादयोः नूपुरं बद्धवान् अस्मि । यदा सा निद्रामग्ना एव उत्तिष्ठति तदा नूपुरशब्दः उत्पद्यते । तदा मया जागरणं प्राप्यते । तां पुनः आनीय शय्यायां शाययामि अहम् । एवं सकृत् शायितं चेत् आरात्रि सुखनिद्रां प्राप्नोति सा'' इति ।

''स च नूपुरस्य झणत्कारः दिवाकाले किमर्थं न श्रूयते ?'' इति कुतूहलेन अपृच्छत् जयन्तः ।

''वस्तुतः सा नूपुरधारणं सर्वथा न इच्छति । अतः सा यदा निद्रामग्ना भवति तदा अहं नूपुरं धारयामि, तस्याः जागरणात् पूर्वम् अपनयामि च । कानिचन दिनानि गच्छतु नाम । अनन्तरकाले सा नूपुरधारणं यथा अङ्गीकुर्यात् तथा कारयिष्यामि'' इति अवदत् मनोहरः ।

नूपुरझणत्कारस्य मर्म ज्ञातम् अभवत् जयन्तेन । अनन्तरदिने सः मित्राणि दृष्ट्वा अवदत् - ''भवद्भिः यः नूपुरझणत्कारः श्रुतः सः न पिशाच्याः, न महालक्ष्म्याः, न वा निधिदेव्याः, अपि तु मनोहरस्य पत्न्याः । मूढविचारे मतिं कुर्वन्तः 'भवन्तः व्यर्थतया धनव्ययं कृतवन्तः । इतः परं वा एतादृशी प्रवृत्तिः त्यज्यताम् । विचारनिकषेण परीक्ष्य एव विषयः ग्रहीतव्यः, न तु अविचिन्त्य । तदा एव जीवनं सुखपूर्णं तृप्तिदायकं च भवेत्'' इति ।

एतत् श्रुत्वा महेन्द्रादयः लज्जया शिरः अवनमय्य स्थितवन्तः । किञ्चित्कालानन्तरं ते परस्परं मुखं पश्यन्तः मुक्तमनस्कतया उच्चैः हसितवन्तः ।



# वार्ताविशेषः

## गगनयात्रिणां कृते चलच्चित्रम् !



अद्य विमानयानेषु बहुषु प्रत्यासनं दूरदर्शन-सम्बद्धा जवनिका भवति । प्रयाणकर्तारः व्यवस्थापकैः दत्तायाम् आवल्यां स्थितं यत्किमपि चित्रं द्रष्टुम् अर्हन्ति तत्र । एवमेव गगनयात्रिणः अपि चलचित्राणि द्रष्टुम् अर्हन्ति अद्य । अन्ताराष्ट्रियबाह्याकाशकेन्द्रे (ऐ.एस्.एस्.) स्थिताः गगनयात्रिणः हेरी-पाटर्चित्राणां दर्शने उत्सुकाः । अतः 'नासा' संस्थया *'हेरी पाटर् एण्ड् गोब्लेट् आफ् फायर्'* इत्येतस्य चित्रस्य प्रदर्शनाय व्यवस्था कृता अस्ति । ऐ.एस्.एस्.केन्द्रं भूमितः ३५४ कि.मी.मिते औन्नत्ये भ्रमत् भवति । आधुनिके वैज्ञानिके युगे किं किं न सम्भवेत् ?

## भारतीयमहिला गगनयात्रायै चिता



खनजाशिवसुब्रमणियम्वर्या ३५ वर्षीया भारतीयमूला महिला । सा मलेशियादेशे तन्त्रज्ञा अस्ति । अग्रिमे वर्षे अन्ताराष्ट्रिय-बाह्याकाशकेन्द्रे (ऐ.एस्.एस्.) यः वासः कल्पयिष्यते तदर्थं चितेषु चतुर्षु अभ्यर्थिषु अन्यतमा अस्ति सा अपि । अन्यैः त्रिभिः सह सा अपि मास्कोनगरं गता अस्ति, रशियन्गगनयात्रिसंस्थया आयोजितां वैद्यकीयतान्त्रिकार्हतापरीक्षां सम्मुखीकर्तुम् ।

## न्यूट्रिन्स्पर्धा - २




१. वज्रखन्या युतं राज्यं किम् ?

अ) महाराष्ट्रम् आ) मध्यप्रदेशः इ) राजस्थानम् ई) कर्णाटकम्

२. का नदी अरेबियन्समुद्राभिमुखं प्रवहति ?

अ) नर्मदा आ) गोदावरी इ) कृष्णा ई) कावेरी

*(उत्तराणि ६३ तमे पुष्ठे)*





# गोलाकारिकायाः शिलायाः कथा

विद्यानन्दस्वामी विजयपुरम् आगतवान् । तस्य ग्रामस्य प्रमुखः विश्वपतिः स्वगृहे तस्य वासं परिकल्प्य तं योग्येन आतिथ्येन सत्कृतवान् । तस्य प्रवचनार्थं सभामण्डपादिकं निर्मातुं प्रभूतं धनम् अपि सः दत्तवान् । अतः प्रवचनमण्डपे विद्यानन्दस्वामिनां पीठस्य पार्श्वे एव एकं भव्यम् उत्कृष्टम् आसनं परिकल्पितं व्यवस्थापकैः ।

प्रवचनारम्भात् किञ्चित् पूर्वं तत् स्थलम् आगतवान् विश्वपतिः । यद्यपि सः आसनम् अपश्यत्, तथापि तस्मिन् अनुपविशन् सामान्यैः सह भूमौ एव उपाविशत् । एतत् लक्षितवद्भिः व्यवस्थापकैः बहुधा निवेदितं चेदपि आसने उपवेशनं सर्वथा न अनुमतं तेन ।

विद्यानन्दस्वामिवर्येण अपि एषः प्रसङ्गः अवलोकितः एव । तस्मै विश्वपतेः एषः व्यवहारः विशेषतः अरोचत । अतः एव प्रवचनसमये सः - ''मानवेषु ये गुणाः अवश्यं भवेयुः तेषु विनयः प्रधानः । यत्र विनयः भवति तत्र सहनाशक्तिदैवभक्त्यादयः अवश्यं भवन्ति । सम्पद्धनपत्नीपुत्रादयः पूर्वजन्मनः पुण्यस्य परिणामतः प्राप्यन्ते इति प्राज्ञाः वदन्ति । यत् प्राप्तं तस्य परिरक्षणाय प्रयासः अवश्यं करणीयः । इहलोकसुखं न शाश्वतम् । अतः लोके सर्वैः अपि परलोकसुखार्थम् एव अधिकः प्रयासः करणीयः । सद्व्यवहाराः एव इहलोके परलोके च उपकुर्वन्ति । विनयः तेषु प्रमुखः । अस्माकं स्थितिः उच्चा नीचा वा स्यात् नाम, तथापि विनयः तु कदापि न परित्यक्तव्यः । यत्र विनयः तत्र गर्वादीनाम् अवकाशः न भवति । अत्र उदाहरणरूपेण अहं गोलाकारिकायाः कस्याश्चित् शिलायाः कथाम् अत्र श्रावयामि'' इति उक्त्वा कथाम् आरब्धवान् -

गोदावरीनद्याः तटे आम्रनारिकेलादयः

चक्रपाणिः




विविधाः वृक्षाः आसन् । कदाचित् गोदावर्यां महापूरः उत्पन्नः । महावेगकारणतः पर्वतस्था काचित् शिला प्रवाहेण सह आगता । नदीतटे स्थितानां नारिकेलवृक्षाणां मध्ये अवरुद्धा सती अतिष्ठत् सा । नारिकेलवृक्षाणां मूलैः बद्धा सा अग्रे न अगच्छत् ।

अल्पे एव काले प्रवाहवेगः क्षीणः जातः । सूर्यकिरणानां कारणतः सा शिला शोभमाना जाता ।

तां लक्षितवान् कश्चन उन्नतः नारिकेलवृक्षः अपृच्छत् - ''अये ! भवती कुतः अत्र आगता ? कथम् अत्र स्थिता ? अग्रे कुतः न गतम् ?'' इति ।

शिला तु किमपि उत्तरं न अवदत् । अत्रान्तरे वृक्षस्य उपरि स्थितम् एकं नारिकेल-फलं सोपहासम् अवदत् - ''एतस्याः कथाम् अहं जानामि । एतस्याः जन्म पर्वतस्य उपरि । प्रवाहवेगकारणतः शिलाः भग्नाः भवन्ति, प्रवाहेण नीयन्ते च । तथा आगता अस्ति एषा शिला । प्रवाहस्य आघातान् प्राप्य एषा गोलाकारिका जाता अस्ति । यदि अस्माकं मध्ये एषा पतिता न स्यात् तर्हि पुनरपि छेदं प्राप्य सिकताकणत्वं गता सती समुद्रे विलीना अभविष्यत्'' इति ।

''यथा प्रहारः तथा आकारः । किम् एतत् अपि किञ्चन जीवनम् ? धिक् एतत् जीवनम् !! वयं तु साभिमानं शिरः उन्नमय्य आकाशे तिष्ठामः । आनन्देन गर्वेण च जीवामः वयम्'' इति अवदत् अपरं नारिकेल-फलम् ।

गोलशिलया किमपि प्रत्युत्तरं न उक्तम् । एवमेव कालः गतः ।

नदीतीरसमीपे कश्चन शिवालयः आसीत् । कश्चन भक्तः स्थालिकायां नारिकेलपुष्पगन्धवर्तिकादीनि संस्थाप्य तं शिवदेवालयम् अगच्छत् । नारिकेलं शिवलिङ्गस्य पुरतः अस्थापयत् ।

नारिकेलेन त्रीणि अपि नेत्राणि विशालीकृत्य शिवलिङ्गं दृष्टम् । तेन अभिज्ञातं यत् पूर्वं कदाचित् वृक्षाणां मध्ये दृष्टा गोलशिला एव एषा इति ।

तावता सा मूर्तिरूपा शिला अपृच्छत् - "अये मित्र ! भवतः उच्चस्थितिः गर्वः च क्व गतः ? अपमानसहनस्यापि कापि सीमा स्यात् इति उक्तम् आसीत् खलु भवता ? आत्मानम् अमरं मत्वा पूर्वं मयि महती उपेक्षा दर्शिता आसीत् भवता । किन्तु अद्य किं जातम् ? किमर्थम् एषा क्षीणा दशा प्राप्ता भवता ?" इति ।

तावता अर्चकः अन्यया शिलया घट्टयित्वा नारिकेलस्य भङ्गम् अकरोत् । तदा पश्चात्तापदग्धेन नारिकेलेन उक्तम् - "आर्ये ! क्षन्तव्यः अहम् । वृक्षस्य ऊर्ध्वभागे स्थितः अहं गर्वेण व्यवहरामि स्म । अधः स्थितान् धिक्करोमि स्म । अद्य तु भवत्याः सर्वपूज्यता । मम च नैवेद्यरूपता । भवत्या उन्नते पर्वते जन्म प्राप्तम् । पवित्रायां गोदावर्यां वासः कृतः । कष्टानि बहुधा सोढानि । अतः एव अद्य एषा पूजार्हता प्राप्ता अस्ति भवत्या । सहना विनयश्च भवत्याः गुणः आसीत्" इति ।

अर्चकेण पश्चात्तापदग्धं तत् नारिकेलं शिवाय अर्पितम् । तस्मात् तत् पवित्रं जातम् । प्रसादरूपेण तस्य वितरणं प्रवृत्तम् ।"

एवं कथां समाप्य विद्यानन्दस्वामिवर्यः पुनः अवदत् - "नदीप्रवाहे यथा गोलशिलया विविधानि कष्टानि सोढानि तथा मानवेन अपि जीवने अनेकानि कष्टानि सोढव्यानि भवन्ति । यः सर्वं सोढ्वा अग्रे गच्छति सः एव उन्नतां स्थितिम् अवाप्नोति । तस्यैव जीवनं धन्यं भवति । सः एव पूज्यः भवति लोके । यः तु महता गर्वेण व्यवहरति सः नारिकेलम् इव अन्याधीनताम् अनुभवति निश्चयेन । जीवने तेन कदाचित् वा महान् पश्चात्तापः अनुभोक्तव्यः भवति एव" इति ।



# यः कर्तव्यं निर्वहति सः एव पुत्रः

श्रीपुरवासी विश्वनाथः वृत्त्या अध्यापकः । स्ववृत्तौ तस्य विशेषप्रीतिः । तस्य अध्यापनम् उत्तमम् । अतः विद्यार्थिनः तेषां पितरः च तस्मिन् विशेषतः स्निह्यन्ति स्म ।

विश्वनाथस्य पत्नी लक्ष्मीः गुणवती पत्यनुरूपा च । तयोः पुत्रस्य नाम चैतन्यः इति । विश्वनाथः लक्ष्मीः च पुत्रं प्रीत्या पोषितवन्तौ । ग्रामे अध्ययनं समाप्य चैतन्यः अग्रिमाध्ययनाय नगरं गतवान् ।उच्चाध्ययनं कृत्वा तत्रैव उद्योगं प्राप्य सः काञ्चित् तरुणीं परिणीतवान् । एतदर्थं मातापित्रोः अङ्गीकारः न प्राप्तः तेन ।

पुत्रस्य एतेन व्यवहारेण खिन्नः विश्वनाथः कदाचित् पत्नीम् अवदत् – ''अस्मान् अपृष्ट्वा एव तेन काचित् परिणीता । यदि सः अस्मान् पृच्छेत् तर्हि किं वयं निराकुर्याम ?'' इति ।

तस्मिन् एव वर्षे ग्रीष्मविरामकाले सः पत्न्या सह तीर्थयात्रार्थं गतवान् । हरिद्वारे तेन कानिचन दिनानि उषितम् । कदाचित् सः भगवतः दर्शनं प्राप्य मन्दिरस्य पुरतः उपविष्टवान् आसीत् । तदा दशवर्षीयः कश्चन बालकः भिक्षां याचन् तस्य पुरतः आगतवान् ।

''वत्स ! एषः अध्ययनार्थं समयः । किमर्थं भिक्षायाचनं क्रियते भवता ? भवतः मातापितरौ किं कुरुतः ?'' इति अपृच्छत् विश्वनाथः ।

''षड्भ्यः वर्षेभ्यः पूर्वं मम मातापितरौ नौकादुर्घटनायां प्राणवियोगं प्राप्तवन्तौ । वयं निर्धनाः । मम पितामहः अङ्गविकलः । भिक्षातः यत् प्राप्यते तेनैव आवाभ्याम् उदरं पूर्यते'' इति दैन्येन अवदत् सः बालः ।



विश्वनाथः तम् अपृच्छत् – ''भवतः नाम किम् ?'' इति ।

''मल्लिकः'' इति उक्तं बालेन ।

''भवतः अध्ययनाय यदि अहं व्यवस्थां कुर्यां तर्हि किं भवान् अध्ययनं कुर्यात् ?'' इति पृष्टवान् विश्वनाथः ।

''अवश्यम् । किन्तु तदा मम पितामहस्य का गतिः भवेत् ?'' इति सातङ्कम् अपृच्छत् मल्लिकः ।

''तस्य निमित्तम् अपि योग्यां व्यवस्थाम् अहं करिष्यामि ।

अध्ययनं किं क्रियेत भवता ?'' इति पुनः अपृच्छत् विश्वनाथः । अङ्गीकारपूर्वकं शिरः चालितवान् मल्लिकः ।



एतदनन्तरं विश्वनाथः पत्न्याः अङ्गीकारं प्राप्य मल्लिकं स्वगृहं नीत्वा अध्ययनाय व्यवस्थां कृतवान् । तस्य पितामहः अपि तेन स्वगृहं नीतः ।

कालः गतः । दशवर्षाभ्यन्तरे मल्लिकः उत्तमं शिक्षणं प्राप्तवान् । वृद्धः पितामहः दिवं गतः । विश्वनाथः अपि दिवं गतः । विश्वनाथस्य मरणात् लक्ष्मीः यथा तथैव ग्रामवासिनः सर्वे दुःखं प्राप्तवन्तः । पितुः उत्तरक्रियार्थं पुत्रः चैतन्यः आगन्तुं न शक्तः, यतः कार्यार्थं सः दूरप्रदेशं गतः आसीत् । मल्लिकेन एव विश्वनाथस्य उत्तरक्रिया निर्वर्तिता ।

सप्ताहद्वयानन्तरं चैतन्यः श्रीपुरम् आगतवान् । 'समग्रा सम्पत्तिः मल्लिकाय दातव्या' इति पित्रा मृत्युपत्रं लिखितम् इति ज्ञातवतः चैतन्यस्य महान् कोपः । मात्रा सह मया एतद्विषये कलहः करणीयः इति विचिन्त्य सः वेगेन मातुः प्रकोष्ठं प्रति अगच्छत् । तावता प्रकोष्ठे प्रवर्तमानं सम्भाषणं तेन श्रुतम् । सः गमनं स्थगितवान् ।

मल्लिकः वदति स्म - ''गुरुवर्येण मम शिक्षणस्य व्यवस्था कृता । पदवीबलेन अहं कुत्रचित् उद्योगं प्राप्नुयाम् एव । एतावत्पर्यन्तं भवन्तौ मां पोषितवन्तौ । मह्यम् आश्रयं, शिक्षणं, प्रीतिं च दत्तवन्तौ । अतः आजीवनं भवत्याः निमित्तं व्यवस्थाकल्पनं मम आद्यं कर्तव्यम् । तदहं करिष्यामि एव । किन्तु एषा सम्पत्तिः मह्यं मास्तु । भवत्याः पुत्राय अहम् एताम् अर्पयितुम् इच्छामि । कृपया अनुज्ञायताम्'' इति ।

एतस्य वचनस्य श्रवणात् चैतन्यः मल्लिकस्य हृदयस्य वैशाल्यम् अवगतवान् । सः अन्तः गत्वा मल्लिकस्य हस्तौ गृहीत्वा - ''भवान् मम भ्रातृसमानः । जन्मना कोऽपि पुत्रत्वं न प्राप्नोति । यः मातापित्रोः विषये स्वकर्तव्यं निर्वहति सः एव वस्तुतः पुत्रः । अतः पैतृकी सम्पत्तिः भवता एव प्राप्ता भवेत् । मम माता नगरं प्रति आगन्तुं न इच्छति । अतः अत्र स्थित्वा भवता एव तस्याः योगक्षेमादिकं द्रष्टव्यम्'' इति अवदत् ।

तस्य प्रार्थनाम् अङ्गीकुर्वन् मल्लिकः ग्रामे एव अवसत् । यत्र अधीतं तस्मिन् विद्यालये एव तेन अध्यापकोद्योगः अपि प्राप्तः । लक्ष्मीं सः मातरं भावयन् प्रीत्या पोषितवान् । लक्ष्मीः यावज्जीवं सन्तोषेण दिनानि यापितवती ।

**- वि. प्रवीणा, नेल्लूरुजिल्ला**

# चन्दमामाप्रश्नावली - ११

Co-sponsored by
Infosys FOUNDATION,
Bangalore

यः समुचितम् उत्तरं दास्यति सः अर्हति रू.२५०/- पारितोषिकत्वेन*

अत्र ये प्रश्नाः भवन्ति तेषाम् उत्तराणि गतवर्षस्य (२००५) द्वादशसु सञ्चिकासु शीर्षकेषु कथासु या सन्ति । यत् पठितं तस्य स्मरणतः उत्तरम् अविलम्बेन प्राप्यते । यदि न स्मर्येत तर्हि गतस्य वर्षस्य द्वादश अङ्कान् पुरतः संस्थाप्य पृष्ठेषु परिशील्य उत्तरं प्राप्यतां लीलया । आम्, लीलाविषयः एव अस्ति अयम् ।

** एकाधिकजनाः यदि समुचितम् उत्तरं प्रेषयेयुः तर्हि तेषु पञ्च जनान् यादृच्छिकतया चित्वा तेषु पारितोषिकधनं वितीर्यते ।*

एवं क्रियतां भवद्भिः - १. उत्तराणि लेखनीयानि । २. नाम, वयः, (ऊनषोडशवर्षीयाः एव अत्र भागं वोढुम् अर्हाः) सङ्केतः (पिन्कोड्सहितः) च प्रेषणीयम् । ३. एकस्य कुटुम्बस्य एकः एव सदस्यः अत्र भागं वोढुम् अर्हः । ४. ग्राहकता अस्ति चेत् ग्राहकसङ्ख्या लिख्यताम् । ५. पिहितपत्रस्य उपरि चन्दमामाप्रश्नावली - ११ इति लेखनीयम् । ६. डिसेम्बर्समाप्तितः पूर्वम् उत्तराणि अस्माभिः प्राप्तव्यानि । ७. फेब्रवरीमासे परिणामः प्रकाशयिष्यते ।

१. 'पूर्वं यत् दण्डितं तस्य विषये विवेकिनः खिन्नाः न भवन्ति, अपि तु कृतज्ञताभावं वहन्ति' इत्येतत् शिल्पाचार्यवचनं श्रुत्वा राजा स्वव्यवहारं परिष्कृतवान् । सः राजा कः ? अयम् अंशः कस्यां कथायाम् अस्ति ?

२. अन्ताराष्ट्रियं दारिद्र्यनिवारणदिनं कदा आचर्यते ?

३. सिद्धार्थः यदा कठोरे तपसि मग्नः आसीत् तदा काचित् गर्भिणी गोपिका - ''मयि पुत्रः यदि जायेत तर्हि एतस्य तपस्विनः पुनः दर्शनं करिष्यामि'' इति सङ्कल्पं कृतवती । तस्याः नाम किम् ?

४. 'उत्तमानुत्तमतानिर्णयः तत्तस्य चिन्तनम् अवलम्बते, न तु कर्म' इत्येतत् धर्मसूत्रं कस्यां वेतालकथायां निरूपितम् अस्ति ?

५. 'पूर्वजैः अनुसृतम् इति एकेन एव कारणेन विना चिन्तनं नियमानाम् अनुसरणम् अनर्थाय' इत्येषा नीतिः कस्यां कथायां ज्ञापिता अस्ति ?

६. एतत् चित्रं कस्याः कथायाः ?



## गुजरातराज्यीया जानपदकथा

# नापितस्य भाग्यप्राप्तिः

सेवारामः कश्चन निर्धनः नापितः । गृह-निर्वहणार्थं यावत् आवश्यकं तावत् अपि धनं सः अर्जयितुम् अशक्तः आसीत् । अतः महती निर्धनता तं बाधते स्म सदापि । तत्तद्दिनस्य आयः तत्तद्दिनस्य तण्डुलशाकादिक्रयणाय अपि अपर्याप्तः भवति स्म । यस्मिन् दिने अधिकम् अर्जनं भवेत् तस्मिन् दिने आतृप्ति भोजनं भवेत् । किन्तु तादृशं दिनं तस्य जीवने विरलम् एव । अतः तस्य पत्नी शिवानी सदा तं निन्दति स्म – 'भवान् अयोग्यः, मूर्खः च' इति । सा सदा विवाहस्य पूर्वतनं जीवनं स्मरति स्म, यच्च विविधैः भक्ष्यैः, वर्णरञ्जितैः वस्त्रैः च सम्पन्नम् आसीत् ।

एकदा सायङ्काले सेवारामः रिक्तहस्तः सन् गृहम् आगतवान् । तस्मात् तेन रात्रौ शयनपर्यन्तं पत्न्याः तर्जननिन्दनपीडा निरन्तरम् अनुभोक्तव्या अभवत् । एतस्य निवारणार्थं मया किं करणीयम् इति चिन्तयन् एव सः निद्रां प्राप्तवान् ।

प्रातः शीघ्रम् एव उत्थाय स्नानादिकं समाप्य कर्तरीकङ्कतादीनि क्षौरोपकरणानि गृहीत्वा गृहतः प्रस्थितवान् सः पत्नीम् आहूय उक्तवान् – "यावत् मया पर्याप्तमात्रेण धनं न अर्ज्येत तावत् गृहं प्रति न आगमिष्यते" इति ।

द्वारे स्थित्वा एतत् श्रुतवती शिवानी आश्चर्ययुक्ता अभवत् । सा तं किमपि न अवदत् ।

तया तु एतत् ज्ञातमेव आसीत् यत् तस्मिन् ग्रामे तादृशाः धनिकाः न सन्ति, ये च प्रतिदिनं मुखक्षौरं कदाचित् केशकर्तनं वा कारयित्वा तदुचितं धनं दद्युः । ग्रामजनाः सर्वे निर्धनाः एव । ते नापिताय किं वा दद्युः ? तेषु बहवः जनाः 'अग्रिमचक्रे दास्यामः' इति आश्वासनमात्रं यच्छन्ति स्म । अतः सेवारामस्य स्थितौ प्रगतिः न भवति स्म एव ।

सेवारामः ग्रामं त्यक्त्वा बहुदूरं गतवान् ।





तस्मात् तेन महती श्रान्तता प्राप्ता । श्रान्ततायाः निवारणाय सः कस्यचित् महतः वृक्षस्य छायायाम् उपविष्टवान् । 'नगरगन्तारः कदाचित् मम उपकरणानि दृष्ट्वा त्वरया क्षौरं कारयेयुः अपि' इति तस्य चिन्तनम् आसीत् । दौर्भाग्यवशात् कोऽपि तादृशः न प्राप्तः तेन । श्रान्तः सः विश्रान्त्यर्थं कञ्चित् समयं तत्रैव पादौ हस्तौ च प्रसारितवान् । शयनस्य अनुक्षणं तेन निद्रा प्राप्ता ।

यस्य वृक्षस्य अधः सः निद्रां कृतवान् आसीत् तस्मिन् एव वृक्षे पिशाचः कश्चन वासं करोति [illegible] सेवारामस्य घोरिकाध्वनिं श्रुत्वा [illegible] मया प्रयतनीयम् आसीत् [illegible] एव मत्समीपम् [illegible] उपरिष्टात् अधः अवतीर्णवान् ।

वृक्षात् अवतीर्णः पिशाचः - 'आदौ एतं जागरय्य भाययिष्यामि, ततः खादिष्यामि' इति चिन्तितवान् । बहुधा ध्वनिः कृतः चेदपि गभीरनिद्रां प्राप्तवान् सेवारामः जागरणं न प्राप्तवान् एव । यदा पिशाचः तं हस्ताभ्यां बलात् अकम्पयत् तदा सेवारामः मन्दं नेत्रे उन्मीलितवान् । पिशाचः तस्य मुखस्य समीपे स्वस्य भयङ्करं वदनं स्थापयित्वा तं भीतं कर्तुं चेष्टां कुर्वन् - ''भोः, अद्य भवतः देहः मम कवलायते इति चिन्तयतः मम महान् अस्ति सन्तोषः'' इति अवदत् । हस्तद्वयेन सः तस्य कण्ठं दृढतया गृहीतवान् अपि ।

बहुदूरं पादाभ्यां चलितम् इति कारणेन नितरां [illegible]न्तः सेवारामः क्षणं यावत् पुरतः प्रवर्तमानं

सम्यक् न अवगतवान् । किन्तु यदा पुरतः पिशाचः दृष्टः तदा तु सः दिग्भ्रान्तः जातः । 'अद्य पिशाचहस्तेन एव मरणं भविष्यति इति भाति' इति चिन्तयन् सः तदर्थं सज्जः अभवत् अपि । अनुक्षणं तेन असहाया पत्नी स्मृता । 'मम मरणानन्तरं वराकी सा कथं जीवेत् ?' इति चिन्तनम् आगतं तस्य मनसि । तस्याः कृते वा मया कथमपि मरणात् आत्मा रक्षणीयः इति चिन्तयतः तस्य मनसि उपायः कश्चित् झटिति एव स्फुरितः ।

"अये, मूर्खपिशाच ! अलं मौढ्येन । अचिरात् मम दृष्टिपथात् यदि भवता न अपगम्येत तर्हि महत् कष्टम् अनुभोक्तव्यं भवेत्" इति पिशाचम् अवदत् सः । किन्तु पिशाचः ततः न अपगतः ।

"किं भवान् मया गृहीतं पिशाचं द्रष्टुम् इच्छति ?" इति पृच्छन् सेवारामः स्वस्य क्षौरपेटिकाम् उद्घाट्य तत्रत्यं दर्पणं बहिः आनीय - "अत्र पश्यतु तावत् । एतादृशाः अन्ये अपि पिशाचाः सन्ति मम पेटिकायाम्" इति अवदत् ।

दर्पणे स्थितं पिशाचरूपं दृष्ट्वा सः पिशाचः दिग्भ्रान्तः, भीतः च । "अहो ! हा हन्त ! भोः, कृपया मां तेन सह पेटिकायां मा बध्नातु" इति अवदत् पिशाचः सेवारामस्य हस्तौ गृहीत्वा ।

"अस्तु नाम । सूर्योदयात् पूर्वं भवान् रत्नादीनाम् आनयनं दानं च यदि अङ्गीकुर्यात् तर्हि अहं पेटिकायां भवतः बन्धनस्य चिन्तनं परित्यजेयम्" इति अवदत् सेवारामः ।

पिशाचः एतत् अङ्गीकृत्य ततः अदृश्यः जातः । सेवारामः दर्पणं पेटिकायां संस्थाप्य सूर्योदयम् एव प्रतीक्षमाणः उपाविशत् ।

सूर्योदयात् पूर्वम् एव पिशाचः तस्य पुरतः प्रत्यक्षः भूत्वा रत्नग्रन्थिम् अस्थापयत् । ग्रन्थिम् उद्घाट्य रत्नानि अभिज्ञाय तृप्तिं प्रकटितवान् सेवारामः ।

"भवतु नाम । एषोऽहम् इदानीं नगरं गमिष्यामि । सायं पुनः आगमिष्यामि" इति उक्त्वा सः नगरं प्रति प्रस्थितवान् । 'ग्रामं प्रति रत्नादीनां नयनेन न किमपि प्रयोजनम् । अतः नगरे एतस्य विक्रयणं वरम्' इति चिन्तितवान् आसीत् सः ।

नगरं यावत् प्राप्तं तावता तस्य मनसि अपरः विचारः आगतः - 'एतेषां विक्रयणात् अपि न्यासीकृत्य धनप्राप्तिः एव वरम्' इति । अतः सः नगरे कुसीदवणिजः आपणम् अन्विष्य आपणिकम् अवदत् - "एतानि न्यासीकृत्य किञ्चित् धनं दीयताम् । मासानन्तरं मया एतानि





प्रतिनेष्यन्ते'' इति ।

कुसीदवणिक् तानि परीक्ष्य तेषाम् अकृत्रिमतां दृढीकृत्य सेवारामाय प्रभूतम् एव धनं दत्तवान् ।

सेवारामं महती बुभुक्षा बाधते स्म । अतः सः आपणिकं पृष्ट्वा भोजनालयस्थानं ज्ञात्वा तत्र गत्वा आतृप्ति भोजनम् अकरोत् । ततः कस्यचित् गृहस्य पुरतः सुखेन शयानः सः विश्रान्तिसुखम् अपि सम्यक् अनुभूतवान् । सायङ्कालाभ्यन्तरे तस्य सर्वा अपि श्रान्तिः अपगता आसीत् ।

ततः निर्गतः सः अन्धकारप्राप्तितः पूर्वं तत् स्थलं प्राप्तवान्, यत्र च रत्नानि प्राप्तानि आसन् ।

यदा सर्वत्र अन्धकारः प्रसृतः तदा सेवारामः पेटिकायाः उपरि हस्तं संस्थाप्य शयनम् अकरोत् । पिशाचागमनसम्भावना आसीत् इत्यतः तेन निद्रा तु न कृता ।

वृक्षस्य उपरि स्थितः पिशाचः तं दृष्ट्वा अपरस्मिन् वृक्षे निवसन्तं पिशाचम् आहूय गतरात्रौ प्रवृत्तं सर्वं विस्तरेण अश्रावयत् । ततः तौ बहुधा चिन्तनं कृतवन्तौ । अन्ते निर्णीतं यत् पूर्वदिने दत्तानि रत्नानि प्रतिप्राप्तव्यानि, यत् पिशाचान् आत्मनि धरति तत् वस्तु चोरणीयं च इति । मध्यरात्रसमये तौ अधः आगतौ । सेवारामः निद्रां कृतवान् उत न, तदीयायाः पेटिकायाः अपहरणं कथं शक्येत इति तौ परिशीलितवन्तौ ।

सेवारामः तु निद्राम् अभिनयन् निमीलितनेत्रः सन् जागरितः एव आसीत् । यदा तौ पेटिकां स्पृष्टवन्तौ तदा सः झटिति उत्थाय पेटिकातः दर्पणं कर्तरीं च बहिः आनीतवान् । एकेन हस्तेन दर्पणः, अपरेण कर्तरी च तेन गृहीतः । कर्तरीं पिशाचयोः अभिमुखं गृहीत्वा सः 'कर् कर्' इति कर्तनशब्दम् उच्चैः अकरोत् । दर्पणः च पिशाचयोः पुरतः गृहीतः आसीत् तेन । कर्तरीशब्दं कर्तरीचालनं च दृष्ट्वा पिशाचौ नितरां भीतौ ।

यावत् तौ वृक्षम् आरोढुम् उद्युक्तौ तावता सेवारामः दृढस्वरेण अवदत् – ''अलम् अलं पलायनेन । भवतोः अन्यतरः इतः गत्वा सुवर्णनाणकानि आनयेत्, सूर्योदयात् पूर्वं प्रत्यागच्छेत् च । अन्यथा भवन्तौ उभौ अपि पेटिकायां स्थापयिष्यामि अन्यैः क्रूरजन्तुभिः सह'' इति ।

एतत् श्रुत्वा अपरः पिशाचः ततः अधावत् । सेवारामः मनसि एव हसन् कर्तरीदर्पणहस्तः

सन् तत्रैव उपाविशत् । 'यावत् मम सुहृत् न प्रत्यागच्छेत् तावत् इतः मम मोक्षः नास्ति' इति चिन्तयन् अपरः पिशाचः अपि भीत्या कम्पमानः तत्रैव अतिष्ठत् ।

सूर्योदयात् पूर्वम् एव आगतः पिशाचः सुवर्णनाणकग्रन्थिं कञ्चित् सेवारामस्य पुरतः अस्थापयत् । सेवारामः निरुद्विग्नतया सुवर्णनाणकग्रन्थिं प्राप्य कर्तरीदर्पणहस्तः सन् एव अवदत् - ''इदानीं सूर्योदयः आसन्नः अस्ति । अतः इतः निर्गच्छन् अस्मि अहम् । सायम् अहं प्रत्यागमिष्यामि । तदवसरे अपि भवतोः व्यवहारः असमीचीनः यदि स्यात् तर्हि अवश्यम् एव भवतोः बन्धनं भवेत्'' इति ।

ततः सः स्वस्य दर्पणं कर्तरीं च पेटिकायां स्थापितवान् । 'हन्त ! आवां रक्षितौ !' इति चिन्तयन्तौ तौ पिशाचौ झटिति एव अदृश्यतां गतवन्तौ । सेवारामः नगरं प्रति गमनस्य चिन्तनम् अकृत्वा ग्रामं प्रति प्रस्थितवान् ।

दिनद्वयाभ्यन्तरे एव प्रत्यागतं पतिं दृष्ट्वा शिवानी नितराम् आश्चर्ययुक्ता जाता । सेवारामः गते दिनद्वये प्रवृत्तं सर्वं तां निवेदितवान् । सर्वं श्रुत्वा शिवानी आश्चर्येण स्तब्धा अभवत् । अप्रयत्नेन तस्याः मुखात् वचनं निर्गतम् - ''अहो, धैर्यं भवतः ! भवान् महाबुद्धिमान् उपायचतुरः च इत्यत्र नास्ति सन्देहः'' इति ।

''अद्य वा भवत्याः मुखात् मम विषये उत्तमः अभिप्रायः निर्गतः खलु ? धन्योऽहम्'' इति मन्दहासपूर्वकम् अवदत् सेवारामः ।

निर्धनत्वस्य अपगमात् अनन्तरकाले सः सुखेन जीवितवान् ।



महापुरुषाणां जीवनघटना – १२

# श्रेष्ठस्य राजकुमारस्य विषादमयानि अन्तिमदिनानि



चक्रवर्तिनः शाहजहानस्य चत्वारः पुत्राः । तेषु ज्येष्ठस्य नाम दाराशुकोहः इति । एषः अन्येभ्यः राजकुमारेभ्यः सर्वथा भिन्नः । सत्यान्वेषकेण तेन वेदाः उपनिषदः च अधीताः आसन् । काश्चन उपनिषदः अरबिक्-भाषया अनूदिताः आसन् अपि । सः सर्वदा प्रसिद्धैः विद्वद्भिः सह उपविश्य तत्त्व-शास्त्रविषये चर्चां करोति स्म । सः बुद्धिमान् शूरः च सन् अपि सैन्यबले विश्वासवान् न आसीत् । स्नेहपूर्णेन सौजन्ययुक्तेन च व्यवहारेण सः सर्वेषां हृदयं जितवान् आसीत् । असहायेभ्यः धनं द्रव्याणि च दत्त्वा उपकरोति स्म सः ।

यथा यथा दिनानि गतानि तथा तथा वैदिकसाहित्ये तस्य आसक्तिः प्रवृद्धा । सहजतया सः तादृशस्य साहित्यस्य अध्ययनाय एव अधिकं समयं यापयति स्म । तस्य एषा प्रवृत्तिः केभ्यश्चित् सम्प्रदायप्रियेभ्यः पण्डितेभ्यः न अरोचत । तथापि ते किमपि कर्तुं न अर्हन्ति स्म । प्रपितामहे अकबरे या बुद्धिमत्ता, यत् कौशलं च दृश्यते स्म सा एव बुद्धिमत्ता, तदेव कौशलं च दृश्यते स्म दाराशुकोहे अपि ।

ये दाराशुकोहे असूयावन्तः आसन् ते शाह-जहानस्य अन्येषु पुत्रेषु दुर्भावं जनयितुं प्रयासम् अकुर्वन् । एवं दाराशुकोहविषये विरोधभावं प्राप्तवत्सु अन्यतमः आसीत् तृतीयः पुत्रः औरङ्ग-जेबः । महत्त्वाकाङ्क्षी सः स्वलाभसाधनाय यत्किमपि कर्तुं सज्जः आसीत् । १६५७ तमे वर्षे शाहजहानः नितराम् अस्वस्थः जातः ।

दाराशुकोहस्य सिंहासनारोहणं निश्चितप्रायम् आसीत् । तावता औरङ्गजेबः अनुजेन मुरादेन सह ससैन्यम् आगत्य राजधानीम् आक्रम्य सिंहासनस्य स्वायत्तीकरणाय प्रयासम् अकरोत् । पितुः साहाय्यं प्राप्य दाराशुकोहः त्रिषु स्थलेषु औरङ्गजेबं विरुध्य युद्धम् अकरोत् । तथापि अन्तिमजयः तु औरङ्गजेबस्य एव जातः । विजयं प्राप्तवान् औरङ्गजेबः पितरं कारागारे स्थापयित्वा स्वस्य चक्रवर्तित्वम् उद्घोषितवान् । तस्य द्वितीयः सहोदरः सुजः अपि सिंहासनाय प्रयासं कृत्वा पराजयं प्राप्य रणरङ्गात् पलायितः सन् अरकानप्रदेशे मरणं प्राप्नोत् । औरङ्गजेबः साहाय्यं कृतवते अनुजाय मुरादाय अर्धराज्यदानं यद्यपि प्रतिज्ञातवान् आसीत्, तथापि अन्ते मुरादेन प्राप्तम् उपायनं तु कारागारवासः एव ।

दाराशुकोहः स्थानात् स्थानं प्रति गच्छन् एतदभ्यन्तरे एव पत्नीवियोगं प्राप्तवान् । अन्ते सः अफगानराजस्य जीवनखानस्य आश्रयं प्राप्तवान् । पूर्वं कदाचित् राजा शाहजहानः आज्ञापितवान् आसीत् यत् गजस्य पादयोः अधः पातयित्वा जीवनखानः मारणीयः इति । तदा दाराशुकोहः एव तं रक्षितवान् आसीत् । किन्तु सः एव कृतघ्नताम् आचरन् दाराशुकोहम् औरङ्गजेबस्य अधीनं कृतवान् । औरङ्गजेबः दाराशुकोहम् आग्रानगर्यां कारागारे स्थापितवान् ।

सिंहासनस्य उत्तराधिकारिणं तं गजस्य उपरि आरोप्य शोभायात्रा कारिता आसीत् पूर्वम् । सः एव इदानीम् बन्दित्वेन आकृष्य नीयमानः आसीत् सहस्रशः जनानां पुरतः । एवं नीयमानं तं दृष्ट्वा कश्चन याचकः उच्चैः अवदत् – ''राजकुमार ! पूर्वं बहुवारं भवता मह्यम् अमूल्यानि उपायनानि दत्तानि आसन् । किन्तु इदानीं दौर्भाग्यवशात् कस्यचित् अपि वस्तुनः दाने असमर्थः जातः अस्ति भवान्'' इति ।

दाराशुकोहः एतत् श्रुतवान् । झटिति एव आत्मना धृतं राङ्कवम् एव अपनीय तस्मै याचकाय दत्तवान् सः । एतत् दृश्यं दृष्टवन्तः जनाः अश्रूणि स्रावयन्तः एतां घटनां गीतरूपेण गीतवन्तः । सार्वजनिकरूपेण जातं तस्य दर्शनम् एतदेव अन्तिमं जातम् । औरङ्गजेबेन प्रेरिताः केचन मतगुरवः तस्य मरणदण्डनम् आदिष्टवन्तः ।

१६५९ तमे वर्षे अगस्टमासस्य ३० तमे दिनाङ्के सः प्राणवियोगं प्राप्तवान् ।

## नवम्याः चन्दमामाप्रश्नावल्याः उत्तराणि

१. विष्णुपदस्य अर्थः – सर्वत्र सर्वदा व्याप्तः इति ।
२. हीरादेवी इति ।
३. पपेन्नामकः अंशः ।
४. चेन्नः ।
५. कोचीनगरे । जवहरलालनेहरू-अन्ताराष्ट्रियं क्रीडाङ्गणम् ।
६. डेरियसनामकः ।
७. 'गगनस्पर्शिनी नासिका' इत्येतस्याः जपानीयकथायाः ।



# अमूल्यं स्मारकम्

शिववर्मा विदिशाराज्यस्य राजा । तस्य शासनकाले प्रजाः सर्वाः सुखेन आसन् । वृद्धस्य राज्ञः मनसि कदाचित् विचारः उदितः यत् प्रजाः मां यथा स्मरेयुः तथा किमपि करणीयम् इति ।

सः झटिति चतुरः मन्त्रिणः आहूय अवदत् – ''प्रजाः मां चिरकालं स्मरेयुः इति मम इच्छा । मम शासनस्य प्रशंसां ते सदा कुर्युः । एतदर्थं किमपि निर्मापयितुम् इच्छामि अहम् । कीदृशं स्मारकं निर्मितं चेत् इष्टसिद्धिः भवेत् इति भवन्तः वदन्तु तावत्'' इति ।

तदा विष्णुशर्मा नाम वृद्धः मन्त्री उत्थाय अवदत् – ''महाराज ! अमूल्याभिः श्वेतशिलाभिः अपूर्वस्य कस्यचित् मन्दिरस्य निर्माणं कार्यताम्'' इति ।

''तस्मिन् विशिष्टे भवने रत्नादीनां योजनम् अपि भवेत् चेत् वरम् । यदा यदा तत् दृश्यते तदा तदा भवतः वैभवम् अपि जनैः स्मर्येत । स्मरणं यदा भवेत् तदा प्रशंसा अपि स्यात् एव । तेन भवतः कीर्तिः चिरस्थायिनी भवेत्'' इति अवदत् अनन्तशर्मा नाम मन्त्री ।

ततः वेदशर्मा नाम तृतीयः मन्त्री अवदत् – ''तस्मिन् मन्दिरे सुवर्णेन निर्मिता भवतः प्रतिमा अपि भवेत् । तस्य दर्शनात् प्रजाः भावयितुम् अर्हन्ति यत् अस्माकं राजा सजीवं तिष्ठति इति'' इति ।

एवं त्रिभिः मन्त्रिभिः स्वाभिप्रायः प्रकटितः चेदपि चतुर्थः मन्त्री मणिभद्रः तूष्णीं स्थितवान् आसीत् ।

अतः राजा शिववर्मा तम् अपृच्छत् – ''मणिभद्रवर्य ! किमर्थं भवता किमपि न उक्तम् एव ? एतद्विषये भवतः अभिप्रायः कः ?'' इति ।

तदा मणिभद्रः स्पष्टशब्दैः अवदत् – ''त्रिभिः अपि मन्त्रिभिः स्मारकविषये यत् उक्तं तत् युक्तम् एव । भव्यं स्मारकं कीर्तिं विस्तारयति इत्यत्र नास्ति सन्देहः । किन्तु वैभवमात्रस्य स्मारणात् प्रजाः सन्तुष्टाः भवेयुः

इति नास्ति । अन्यच्च, कस्य स्थितिः कदा कीदृशी भवेत् इति कोऽपि न जानाति । कदाचित् देशे महत् कष्टम् एव उपस्थितम् इति चिन्तयाम, तदा वैभवस्मारकं जनाः निन्देयुः अपि । अतः मम तु भाति यत् वैभवस्मारकस्य निर्माणं यथा तथैव प्रजोपकारकं महत् कार्यम् अपि किमपि करणीयम् इति । भव्यं मन्दिरं तु भवतु । तत् परितः विशालम् उद्यानम् अपि भवतु । तच्च उद्यानं पुष्पलताभिः वृक्षैः च पूर्णं भवतु । तस्य अन्तः विश्रामगृहाणि अपि भवन्तु । तेन यात्रिकाः रात्रौ वासं कर्तुं शक्नुयुः'' इति ।

एतत् अङ्गीकुर्वन् राजा अवदत् - ''मणिभद्रेण युक्तम् एव उक्तम् । वैभवस्मारकं मन्दिरं कीर्तिं वर्धयति इति तु सत्यम् । किन्तु तत् अशाश्वतम् । प्रजानां हिताय कृतं कार्यं कदापि व्यर्थं न । अतः अद्यैव भवतारिणीनद्याः तीरे नगरात् अनतिदूरे विशाले प्रदेशे सुन्दरस्य कस्यचन उपवनस्य निर्माणस्य आरम्भः भवतु । लतावृक्षादीनाम् आरोपणम् आदौ भवतु । तस्य मध्यभागे भव्यस्य भवनस्य निर्माणं भवतु'' इति ।

राज्ञः आदेशस्य अनुसारं मणिभद्रस्य मार्गदर्शने विशालस्य वनस्य निर्माणम् आरब्धम् । असंख्याः सस्यलतादयः तत्र आरोपिताः । ततः वर्षाभ्यन्तरे राजा परं धाम श्रितवान् । मन्दिरस्य मध्यभागे श्वेतशिलया अपूर्वं मन्दिरं निर्मितम् । मन्दिरस्य अन्तः सुवर्णनिर्मिता राज्ञः प्रतिमा अपि प्रतिष्ठापिता ।

वर्षाणि गतानि । चत्वारः मन्त्रिणः अपि दिवं गताः । मन्दिरस्था स्वर्णप्रतिमा चोरैः चोरिता । रत्नादयः अपि अपहृताः अभवन् । प्रतिमायाः अभावात् भवने जनानाम् आस्था न्यूना जाता । गच्छता कालेन तत् भवनं शिथिलं जातम् अपि ।

एतत्सर्वं जातं चेदपि मणिभद्रेण कारितं सुन्दरम् उपवनं तु न विनष्टम् । वृक्षाणां छायासु उपविश्य जनाः श्रमपरिहारं कुर्वन्ति स्म । वासगृहेषु वसन्तः पथिकाः मार्गायासस्य परिहारं प्राप्नुवन्ति स्म । उपवनस्थानि पुष्पाणि जनानां मनः अपहरन्ति स्म । एवं स्मारकभवने विनष्टे जाते अपि राज्ञा निर्मापितम् उपवनं जनैः बहुधा सेव्यमानं सत् तदीयां स्मृतिम् अखण्डतया जनेषु जनयति स्म ।





# अनुचितः उच्चनीचभावः

ब्रह्मदत्तः यदा काशीराज्यं परिपालयन् आसीत् तदा बोधिसत्त्वः सिंहरूपेण जन्म प्राप्तवान् । सः पत्नीसमेतः पर्वतगुहायां निवसति स्म ।

कदाचित् सः आहारप्राप्त्यर्थं पर्वतात् अधः आगतवान् । पर्वतमूले सरोवरसमीपे तृणमये परिसरे केचन हरिणाः शशाः च तेन दृष्टाः । गर्जनं कुर्वन् सः हरिणान् ग्रहीतुम् अधावत् । एवं धावनसमये अनवधानवशात् सः पङ्कराशौ अपतत् । सिंहं दृष्टवन्तः हरिणाः शशाः च भीताः सन्तः वेगेन ततः पलायनम् अकुर्वन् ।

पङ्कात् बहिः आगमनाय सिंहः बहुधा प्रयत्नम् अकरोत् । किन्तु ततः किमपि प्रयोजनं न सिद्धम् । साहाय्यं कर्तुं किं कोऽपि सौभाग्यवशात् अत्र आगच्छेत् इति प्रतीक्षमाणः अतिष्ठत् सिंहः ।

सप्ताहं यावत् तेन तत्रैव स्थितम् । बुभुक्षा निश्शक्तिः इत्यादयः तम् अबाधन्त ।

अथ एकदा जलपानाय कश्चन शृगालः तस्य सरोवरस्य समीपम् आगतः । सः सिंहं दृष्ट्वा नितरां भीतः जातः ।

तदा सिंहः तम् अवदत् - "मित्र ! आ सप्ताहात् अहम् अत्र पङ्के पतितः अस्मि । मम मरणं सन्निहितम् इव । कृपया मां कथमपि रक्षतु" इति ।

"भवान् तु नितरां बुभुक्षितः । यदि अहं भवन्तं रक्षेयं तर्हि मां निश्चयेन खादेत् एव भवान् । एवं स्थिते भवति कथम् अहं विश्वासं कुर्याम् ?" इति अपृच्छत् शृगालः ।

"यः मम प्राणान् रक्षेत् तम् अहं सर्वथा न खादिष्यामि । यदि इतः भवान् मां रक्षेत् तर्हि अहम् आजीवनं 'भवतः उपकारं स्मरेयम् । कृपया मां रक्षतु" इति दैन्येन प्रार्थितवान् सिंहः ।

शृगालः तस्य वचने विश्वस्य शुष्कान्

काष्ठखण्डान् सङ्गृह्य पङ्कगर्ते अपातयत् । तेषाम् उपरि पदं स्थापयित्वा सिंहः कथमपि उपरि आगतवान् ।

ततः उभौ अपि सम्भूय मृगयार्थं गतवन्तौ । सिंहः अल्पेन एव प्रयासेन कञ्चित् प्राणिनम् अमारयत् । उभौ अपि सन्तोषेण खादितवन्तौ ।

''इतः परम् आवां सहोदरौ इव वसाव । भवान् सपरिवारं मम गुहायाम् एव वसतु नाम । तेन च आवयोः मैत्री दृढा भवेत्'' इति अवदत् सिंहः ।

शृगालः एतं प्रस्तावं महता सन्तोषेण एव अङ्गीकुर्वन् पत्न्या सह सिंहस्य गुहां प्रति आगतवान् ।



सिंहेन सह वासः गौरवाय इति शृगालः जानाति स्म । अतः एव सिंहस्य प्रस्तावः अङ्गीकृतः आसीत् तेन । किन्तु सः एतत् अपि जानाति स्म यत् जातिबान्धवेभ्यः दूरे वासतः कीदृशानि कष्टानि सम्मुखीकरणीयानि भवेयुः इति । सिंहः शृगालस्य उदारतां सम्यक् जानाति स्म । अतः कदापि शृगालस्य खेदः यथा न भवेत् तथा जागरूकतया व्यवहरति स्म सः ।

किन्तु शृगाले सिंहस्य यावती प्रीतिः तावती एव प्रीतिः शृगाल्यां न आसीत् सिंह्याः । सा चिन्तयति स्म - 'वयं तु उच्चकुलीयाः, शृगालाश्च निम्नकुलीयाः' इति । शृगाली सिंह्याः एतं वादं विना विरोधम् अङ्गीकृतवती । तस्मात् तयोः कलहः तु कदापि न जातः एव ।

दिनानि गतानि । सिंहेन शृगालेन च अपत्यानि प्राप्तानि । तानि अपत्यानि सर्वदा सहैव आनन्देन क्रीडन्ति स्म । सिंही एतत् न असहत ।

सिंह-शृगालयोः अपत्यैः न ज्ञायते स्म यत् अस्मासु कुलतारतम्यम् अस्ति इति । अतः तैः स्नेहेन क्रीड्यते स्म । तेषु उच्चनीचभावः कोऽपि न दृश्यते स्म ।

सिंही एतस्मात् नितरां खिन्ना जाता । सा कदाचित् पुत्रान् अबोधयत् - ''वयम् उच्चकुलीयाः । शृगालपुत्राः च नीचकुलीयाः । अतः तैः सह भवद्भिः न क्रीडनीयम् । तेभ्यः दूरे स्थातव्यं भवद्भिः । स्नेहः समेषु एव शोभते, न विषमेषु'' इति ।

सिंह्याः एतत् बोधनं तस्याः पुत्रेषु प्रभावम् अजनयत् । अतः ते क्रीडादिसमये भेदभावम् आरब्धवन्तः । अन्याय्यव्यवहारम् अपि कृतवन्तः ते । कदाचित् ते शृगालपुत्रान् अवदन्

- ''वयम् उच्चकुलीयाः । वयम् एव भवतां पालनपोषणादिकं कुर्मः । अतः वयं यत् वदामः तस्य विरोधः न करणीयः भवद्भिः । भवन्तः तु नीचकुलीयाः । अस्माभिः निन्दनं कृतं चेदपि तत् विना विरोधं श्रोतव्यं भवद्भिः'' इति ।

एतत् ज्ञातवती शृगाली कदाचित् पतिं प्रवृत्तं सर्वम् अवदत् । अनन्तरदिने मृगयार्थं गमन-समये शृगालः सिंहम् अवदत् - ''भवन्तः उच्चकुलीयाः । वयं च सामान्याः । अतः आवयोः कुटुम्बयोः सहस्थितिः न शोभते । इतः परं वयं जातिबान्धवैः सह वसामः'' इति ।

मित्रे जातम् एतत् आकस्मिकं परिवर्तनं दृष्ट्वा सिंहः महत् आश्चर्यं प्राप्तवान् । अतः सः तम् एतस्य कारणम् अपृच्छत् । शृगालः प्रवृत्तं सर्वं न्यवेदयत् ।

रात्रौ गुहां प्रत्यागतः सिंहः पत्नीम् अवदत् - ''भवती शृगालपुत्रेषु घृणां वहति इति श्रुतं मया । किम् एतत् सत्यम् ?'' इति ।

''आम् ! निम्नजातीयैः सह मम पुत्राणां क्रीडनम् अहं सर्वथा न सहे । तेन वराकेण शृगालेन किं वशीकरणतन्त्रम् आश्रितम् इति न ज्ञायते । सर्वदा तस्य प्रंशसा क्रियते भवता । शृगालपुत्रैः सह मम पुत्राणां क्रीडनं सर्वथा न रोचते मह्यम्'' इति अवदत् सिंही ।

''शृगालेन किं कृतम् इति पृष्टं खलु भवत्या ? वदामि, शृणोतु । पूर्वं कदाचित् सप्ताहं यावत् अहं गृहं न आगतः इत्येतत् भवती स्मरेत् एव खलु ? तदवसरे पङ्के पतितः अहं बुभुक्षाकारणतः प्राणवियोगदशां प्राप्त-वान् आसम् । तदा एतेन शृगालेन एव अहं रक्षितः । यदि तस्मिन् दिने तेन साहाय्यं कृतं न स्यात् तर्हि इदानीं मम सजीवस्थितिः न अभविष्यत् लोके । भवत्याः जीवनम् अपि कष्टकरम् अभविष्यत् । यः प्राणरक्षणं कृत-वान् तस्मिन् उच्चनीचभावस्य प्रदर्शनं पापाय । तस्य अपमाननं न हि श्रेयसे'' इति पत्नीं बोधितवान् सिंहः ।

स्वस्य दोषम् अवगतवती सिंही शृगालीं क्षमाम् अयाचत ।

एतदनन्तरं सिंहकुलीयाः शृगालकुलीयाः च स्नेहेन जीवन्तः सुखमयं जीवनं यापित-वन्तः ।





# रामायणम्

भरतः पितुः मरणेन कश्चित् कालं यावत् रोदनं कृतवान् । ततः सः मातरं पृष्टवान् - ''अम्ब ! अन्तिमेषु दिनेषु पित्रा किमपि उक्तं किम् ? किम् उक्तम् आसीत् तेन ?'' इति ।

''राम ! लक्ष्मण ! सीते ! इति वदन् एव प्राणैः वियुक्तः अभवत् सः'' इति उक्तवती कैकेयी ।

तदा भरतः आश्चर्येण पृष्टवान् - ''किम् एतत् ? रामः सीता, लक्ष्मणः च तस्मिन् क्षणे किं समीपे न आसन् ? ते कुत्र आसन् तदा ?'' इति ।

''तावता ते वनवासाय गतवन्तः आसन् खलु ? रामः यदा वल्कलानि धृत्वा वन-वासार्थं प्रस्थितवान् तदा सीता लक्ष्मणः च तम् एव अनुसृत्य गतवन्तौ'' इति उक्तवती कैकेयी मन्दस्वरेण ।

भरतः इतोऽप्यधिकेन आश्चर्येण पृष्टवान् - ''रामेण किं पापम् अनुष्ठितम् आसीत्, येन वनगमनं प्राप्तं भवेत् ? सः दुष्कर्म किमपि न करोति । प्राणहरणापराधं कृतवते इव तस्मै एतादृशं घोरं वनगमनदण्डनं किमर्थं विहितम् ? तादृशम् अत्र किं प्रवृत्तम् ?'' इति ।

''तथा कोऽपि अपराधः न कृतः तेन । तस्य पट्टाभिषेकसन्नाहः प्रवर्तमानः अस्ति इति यदा ज्ञातं मया वरद्वयं याचितं - रामः वन-वासार्थं गच्छेत्, भवान् च सिंहासनारूढः भवेत् इति । एतत् महाराजेन अन्वमन्यत । अतः एतत् सर्वं प्रवृत्तम् । अग्रे यत् अनुष्ठातव्यं तद्विषये चिन्तां मा करोतु भवान् । तत् सर्वं वसिष्ठादयः चिन्तयिष्यन्ति । भवान् सन्तोषेण



पट्टाभिषेकाय सज्जः भवतु'' इति उक्तवती कैकेयी ।

कैकेय्याः वचनस्य श्रवणेन भरते महान् क्रोधाग्निः उत्पन्नः ।

''भवत्या पत्युः प्राणा हृताः, रामः च वनं प्रति प्रेषितः । एतादृशम् अकार्यम् अनुष्ठितवत्याः भवत्याः मुखस्य दर्शनम् अपि पापाय एव । क्षत्रियाणां धर्मः - ज्येष्ठः पुत्रः एव सर्वप्रथमं राजत्वम् अर्हति इति । एतत् भवत्या किं न ज्ञातम् ? रामलक्ष्मणाभ्यां विना राज्यशासनं कथं कर्तुं शक्नुयाम् ? इदानीम् एव वनं गत्वा प्रत्यागम्यताम् इति रामं निवेद्य तम् एव राजानं कृत्वा अहं तस्य सेवकः भविष्यामि'' इति मातरं सोद्वेगम् उक्तवान् भरतः ।

''भवान् यदि अत्र न भवेत् तर्हि मम का गतिः ?'' इति रोदनपुरस्सरं पृष्टवती कैकेयी ।

तदा भरतः क्रोधेन अवदत् - ''मां किमर्थं पृच्छति भवती ? गच्छतु ! अग्निप्रवेशं करोतु । अथवा क्वचित् अरण्ये जीवतु । अथवा स्वयं शिरः छित्त्वा मरणं प्राप्नोतु'' इति ।

तावता तत्र उपस्थितः अभवत् मन्त्री । तम् अपि भरतः स्पष्टम् अवदत् - ''राज्येषणा मया न कदापि कृता, नवा एतादृशम् अनुचितः वरः याचताम् इति माता प्रेरिता'' इति ।

भरतः शत्रुघ्नः वा न जानाति स्म यत् रामः लक्ष्मणः सीता च किमर्थं वनं गतवन्तः इति । यतः तौ दूरस्थे अन्यस्मिन् देशे आस्ताम् ।

ततः भरतः शत्रुघ्नः च कौसल्यायाः निकटं गतवन्तौ । तस्याः आलिङ्गनं कृत्वा उभाभ्याम् अपि रुदितम् ।

कौसल्या कैकेय्या कृतं समग्रं विवृतवती । कौसल्यायाः कथनं श्रुत्वा भरतः अचिन्तयत् यत् एषा माम् अपि स्वभावेन मातृसदृशं भावयन्ती अस्ति, मात्रा यद्यत् कृतं तत् सर्वं मया अनुमतम् इति एतस्याः चिन्तनम् इति । अतः तस्य दुःखम् उद्गतम् । तदा कौसल्या विविधैः सान्त्वनवचनैः तं बहुधा समाश्वासितवती ।

दुःखसागरे निमग्नं भरतं गुरुः वसिष्ठः अवदत् - ''वत्स ! दुःखाग्निना ज्वलन्तम् आत्मानं नियन्त्र्य भवान् पितुः अन्त्यसंस्कारविधेः निर्वर्तनं चिन्तयतु'' इति ।

रासायनिकरक्षकतः बहिः आनीतं पितुः शरीरं दृष्ट्वा भरतः - ''तात ! भवान् तु

दिवङ्गतः । अग्रजः सोदरेण सह वनवासार्थं गतवान् । भवतोः अनुपस्थितौ कथम् अहं राज्यभारं वहानि ?'' इति रुदितवान् ।

पुष्पैः सज्जेन शवयानेन दशरथस्य मृतदेहः नीयमानः आसीत् । तस्य पुरतः नागरिकाः स्वर्णरजतादीनि नाणकानि विकिरन्तः सुगन्धवर्तिकाः च गृहीत्वा गच्छन्तः आसन् । दशरथस्य पत्न्यः अपि रुदत्यः एव जनसमूहम् अनुसृतवत्यः । भरतेन सह ताः अपि चितायाः प्रदक्षिणां कृतवत्यः । श्मशाने चितायाः दाहः आरब्धः । आगताः जनाः सर्वे स्वीयं गृहं प्रति प्रस्थितवन्तः ।

भरतः दश दिनानि यावत् पितृशोकाकुलः सन् यापितवान् । श्राद्धादिकर्म यथाविधि कृत्वा सः ब्राह्मणेभ्यः अन्नस्य वस्त्रस्य च दानं कृतवान् । त्रयोदशे दिने भरतः अस्थिसञ्चयनार्थं यदा गतवान् तदा तेन सह गतः शत्रुघ्नः पितुः स्मरणेन साश्रुपातं रुदितवान् ।

तदनन्तरं कञ्चित् समयं तौ एकत्र उपविश्य परस्परं विचारविनिमयम् अकुरुताम् । ''भ्रातुः वनवासम् आदिशन्तं पितरं लक्ष्मणः कथं न अवरुद्धवान् ?'' इति शत्रुघ्नः अपृच्छत् भरतम् आश्चर्यं प्रकटयन् ।

तावता दासी मन्थरा आत्मानं राज्ञीम् इव अलङ्कृत्य वृद्धकपिवत् प्रासादं प्रविष्टवती महता सन्तोषेण ।

द्वारपालकौ तां गृहीत्वा शत्रुघ्नस्य समीपम् आनीतवन्तौ । ''गृह्यतां दृढं तावत् एषा । एषा एव सर्वेषाम् अकार्याणां मूलम् अस्ति'' इति उक्तवन्तौ तौ । शत्रुघ्नः क्रोधाविष्टः सन् ताडनोद्देशेन यदा तां गृहीतवान् तदा तया सह



स्थिताः परिचारिकाः भीताः भूत्वा धावन्त्यः कौसल्यायाः समीपम् आगतवत्यः ।

प्राणापायभीत्या चीत्कुर्वतीं मन्थरां रक्षितुं कैकेयी उपस्थिता । शत्रुघ्नः कैकेयीम् अपि बहुधा निन्दितवान् । अतः सा भरतं तत्र आनायितवती ।

भरतः शत्रुघ्नम् उक्तवान् - ''भवान् स्त्रीवधार्थम् उद्युक्तः अस्ति । एतत् अग्रजः रामः यदि जानीयात् तर्हि आवयोः मुखं न पश्येत् एव । रामः क्रुद्धः मा भवतु इत्येतेन एकेन एव उद्देशेन अहं कैकेयीं न मारितवान् । अन्यथा एतावता तस्याः भूलोकतः निर्गमनम् अभविष्यत् एव । तां कुब्जां त्यजतु भवान्'' इति ।

दशरथस्य दिवङ्गमनस्य अनन्तरं चतुर्दशे दिने नगरस्य गण्याः भरतम् उद्दिश्य अवदन्



- ''राज्यस्य कोऽपि नायकः नास्ति इदानीम् । अराजकता न आरब्धा इत्येतत् एव भाग्यम् अस्माकम् । अतः त्वरितम् एव भवान् अभिषिक्तः भवेत्'' इति ।

''अस्माकं सनातनी परम्परा वदति - ज्येष्ठः पुत्रः एव उत्तराधिकारी भवेत् इति । अतः मम राज्याभिषेकः भवतु इति भवताम् एषा अपेक्षा सर्वथा अनुचिता एव । किरीटं न धरामि अहम् । वनं गत्वा श्रीरामं राजानं कृत्वा आनेष्यामि, तेन यः वनवासः कर्तव्यः सः मया करिष्यते । अरण्ये एव अग्रजस्य पट्टाभिषेकः भविष्यति । अतः तदर्थम् अपेक्षितानां वस्तूनां सङ्ग्रहं कृत्वा मया सह प्रेषयितुं व्यवस्था क्रियताम्'' इति नगरगण्यान् अवदत् भरतः ।

भरतस्य वनं प्रति गमनाय महान् सन्नाहः आरब्धः । दुर्गमप्रदेशेषु अपि वृक्षच्छेदनपूर्वकं नूतनः मार्गः कल्पितः । नदीनां क्रमणाय सेतवः निर्मिताः । मार्गेषु उत्पन्नाः गर्ताः मृत्तिकया पूरिताः । समीचीनेषु स्थानेषु शिबिरकल्पनाय व्यवस्थाः रूपिताः, कूपाः अपि खाताः । मार्गे कुटीरनिर्माणं कृत्वा वीथीनिर्माणं कृतम् इति कारणेन नूतनाः ग्रामाः एव प्रकल्पिताः अभवन् इव । एतादृशानां शिबिराणां पङ्क्तिः सरयूनदीतटतः गङ्गानदीतटं यावत् प्रसृता आसीत् ।

तस्य दिनस्य रात्रौ जातेन शङ्खोद्घोषेण, पणवनादेन, स्तोत्रेण च जागरणं प्राप्य भरतः अवदत् - ''मया स्तोत्रं न अपेक्ष्यते, न वा वाद्यानां वादनम् । यतः अहं राजा नास्मि'' इति ।

भरतस्य राज्याभिषेकस्य सन्नाहे मग्नः वसिष्ठः कतिपयैः कर्मचारिभिः सह राजसभां प्राविशत् । नगरप्रमुखं, मन्त्रिणं, गणनायकान्, भरतं, शत्रुघ्नं च आकारयितुं दूतः प्रेषितः तेन ।

अविलम्बेन एव राजसभायाः अलङ्कारः तथा कृतः, यथा दशरथः राजसभायाम् उपस्थाय सभायाः निर्वहणं कुर्वन् अस्ति इति प्रतीयेत ।

सभासदां समक्षे वसिष्ठः भरतं न्यवेदयत् - ''भवान् राज्याभिषिक्तः भवतु'' इति ।

इतः पूर्वं यत् उक्तम् आसीत् तदेव पुनः उच्चारितं भरतेन । ''श्रीरामं वनतः प्रत्यानेतुं यथाशक्ति प्रयत्नं करिष्यामि इति भवतां समक्षे प्रतिजाने । सः आगन्तुं न इच्छति चेत् अहम् अपि लक्ष्मणः इव तत्रैव भविष्यामि । तत्र

गन्तुम् एतावता एव सर्वविधाः सज्जताः कृताः सन्ति । मार्गनिर्मातारः, कुटीरकल्पकाः च अग्रे प्रस्थिताः सन्ति । मम प्रस्थानमात्रम् अवशिष्टम् अस्ति'' इति अवदत् ।

भरतस्य कथनेन सन्तुष्टाः अभवन् सर्वे । यात्रायाः सन्नाहाय सुमन्त्रः सेनाध्यक्षं न्ययोजयत् । गताः प्राणाः पुनः आयाताः इव अयोध्यायां पुनरपि नवः उत्साहः प्रसृतः ।

तदनन्तरदिनस्य प्रातः एव भरतः उत्थाय यात्रारम्भम् अकरोत् । नवसहस्रं गजाः, षष्टिसहस्रं रथाः, लक्षम् अश्वाः, असङ्ख्याः योद्धारः च तेन सह प्रस्थिताः ।

कौसल्या, सुमित्रा, कैकेयी च स्वयानैः प्रस्थानं कृतवत्यः । तावता कैकेय्यां प्रविष्टः पिशाचः तस्याः निर्गतः आसीत् । आत्मना कृतस्य घोरस्य अपराधस्य निमित्तं पश्चात्तापम् अनुभवन्ती सा व्याकुला सती अग्रे गच्छन्ती आसीत् ।

रामस्य दर्शनं प्राप्तव्यम् इति इच्छावन्तः बहवः जनाः समूहशः भरतम् अनुसृतवन्तः । सहस्रशः विप्राः अपि वृषभशकटैः भरतेन सह यात्रारम्भम् अकुर्वन् ।

एतावता जनसम्मर्देन सह भरतः गङ्गातीरस्थं शृङ्गवेरपुरं प्राप्तवान् । तत्र तत्र आवासं कल्पयन्तु इति सेनां सूचयित्वा सः मन्त्रिणः अवदत् - ''अद्य रात्रौ वयम् अत्रैव विश्रामं करवाम । श्वः गङ्गानद्याः अतिक्रमणं भवतु । इदानीं नद्याम् अवतीर्य पितृतर्पणं करोमि अहम्'' इति ।

गङ्गातटे अपारायाः सेनायाः उपस्थितिं दृष्ट्वा



आश्चर्यं प्राप्तवान् गुहः भरतस्य रथस्य दर्शनेन तम् अभिज्ञातवान् । सः स्वीयान् जनान् आहूय अवदत् - ''भरतः एतावता सेनाबलेन सह किमर्थम् आगतवान् इति न ज्ञायते । 'वनवासतः प्रत्यागत्य राज्यशासनाधिकारं प्राप्नुयात् रामः । अतः सः हन्तव्यः' इति दुरुद्देशेन एव आगतवान् स्यात् अयम् । प्राणैः कण्ठगतैः अपि श्रीरामः रक्षणीयः एव अस्माभिः । अविलम्बेन पञ्चशतं नौकाः सज्जाः क्रियन्ताम् । प्रत्येकस्यां नौकायाम् अपि शतं जनाः भवन्तु । एवं सज्जाः सन्तः भवन्तः गङ्गायाः तीरे उपस्थिताः भवन्तु । नौकासु अन्नास्त्रादिकम् अपि पूर्यताम् । रामस्य हानिः भरतेन अनुद्दिष्टा चेत् अग्रे गमनाय अवसरं कल्पयाम । अन्यथा तस्य सेनाबलम् अत्रैव अवरुद्ध्य युद्धं करवाम'' इति ।

सर्वाः व्यवस्थाः कृत्वा गुहः मत्स्य-मांस-मधु-मूलादिकं गृहीत्वा भरतेन मेलितुम् आगतवान् । आगच्छन्तं गुहम् अवलोक्य सुमन्त्रः भरतम् अवदत् - ''श्रीरामस्य सुहृत् एषः भवतः मेलनाय आगच्छन् अस्ति । सर्वविधसमर्थः अस्ति एषः अरण्यराजः । एतस्य आदरेण सत्कारेण च रामस्य वाससङ्केतः प्राप्तुं शक्यः'' इति ।

''तं गुहं मम समीपम् आनयतु'' इति संसूच्य भरतः सुमन्त्रं ततः प्रेषितवान् ।

गुहः भरतस्य निकटं प्राप्य आनीतं तस्मै उपहारीकृत्य - ''भवताम् आगमनसूचना पूर्वम् एव यदि मया प्राप्ता स्यात् तर्हि अहं सर्वैभवं स्वागतव्यवस्थाम् अकरिष्यम् । रात्रौ अस्माकम् आतिथ्यं प्राप्य एव अग्रे गम्यताम्'' इति भरतम् अवदत् ।

तदा भरतः गुहम् उक्तवान् - ''प्रभो ! एतादृशस्य जनसमूहस्य सत्कारार्थम् उद्युक्तस्य भवतः वचनेन एव वयं हृष्टाः । ततोऽप्यधिकं गौरवं किम् अन्यत् अपेक्ष्येत ? भारद्वाजमुनेः आश्रमस्य दिशि गन्तुम् उद्युक्तानाम् अस्माकं मार्गनिर्देशनं क्रियतां कृपया । इतः अग्रे गमनाय मार्गः दुर्गमः इति श्रूयते'' इति ।

''अस्मदीयाः हस्ताभ्यां बाणादिकं गृहीत्वा भवद्भिः सह आगमिष्यन्ति । अहम् अपि भविष्यामि एव इत्यतः मार्गस्य अन्वेषणस्य आवश्यकता न भविष्यति'' इति अवदत् गुहः ।





# परबुद्धिः विनाशाय..

देवराजः कश्चन निर्धनः जनः । परम्परातः प्राप्तः पुरातनः कश्चन कुटीरः एव तस्य सम्पत्तिः । कुटीरस्य पृष्ठभागे स्थितं क्षेत्रं श्रमेण समीकृत्य सः तत्र कदलीसस्यानि आरोपितवान् । गच्छता कालेन तत्र काचित् वाटिका निर्मिता अभवत् ।

कदाचित् प्रातःकाले देवराजः यदा जलेन सस्यानि सिञ्चन् आसीत् तदा एव तस्य ग्रामस्य भूस्वामिनः पत्नी वृषभशकटेन आगत्य तत्र अवतीर्य –''भोः, एतस्य कुटीरस्य वाटिकायाः च विक्रयणं क्रियते किम् ?'' इति पृष्टवती ।

एतत् श्रुत्वा देवराजः महत् आश्चर्यम् अनुभवन् निरुत्तरः सन् मौनेन स्थितवान् ।

''मूल्यविषये निश्चिन्तः भवतु भवान् । भवते पञ्चशतं रूप्यकाणि दास्यामि'' इति अवदत् भूस्वामिनः पत्नी ।

देवराजः स्वीययोः कर्णयोः एव विश्वासं न प्राप्तवान् । यतः सः जानाति स्म यत् मम कुटीरः द्विशतरूप्यकात्मकं मूल्यम् अपि न अर्हति इति ।

तूष्णीं स्थितं देवराजम् उद्दिश्य भूस्वामिपत्नी पुनः अवदत् – ''अस्तु, सार्धसप्तशतं रूप्यकाणि दास्यामि अहम् । मूल्यविषये दोलायमानं मनः दृढीकृत्य भवान् एतस्य विक्रयणे मतिं करोतु'' इति ।

'एतावान् धनराशिः यदि प्राप्येत तर्हि तावत् धनं मूलधनत्वेन उपयुज्य मया किमपि वाणिज्यम् आरम्भणीयम् । तदा तु मम जीवनं निश्चिन्तं भवेत्' इति अचिन्तयत् सः ।

तदा ईषदिव क्रुद्धा भूस्वामिनः पत्नी – ''भवतः एषः कुटीरः अधिकं मूल्यं न अर्हति इति अहं जानामि । तथापि अधिकं मूल्यं दातुम् अहं सिद्धा जाता अस्मि । एषः मम अन्तिमः निर्णयः । सहस्रं रूप्यकाणि दास्यामि । एतावत् धनं स्वीकृत्य किं भवान् कुटीरविक्रयणं कुर्यात् ?'' इति पृष्टवती ।



देवराजः शिरश्चालनपूर्वकं विक्रयणसम्मतिं सूचितवान् । तदा भूस्वामिपत्नी उक्तवती - ''अद्य सायम् अहं कर्मकरद्वारा धनं प्रेषयिष्यामि । तदभ्यन्तरे भवान् कुटीरं रिक्तीकरोतु'' इति उक्त्वा शकटम् आरुह्य ससन्तोषं ततः अग्रे गतवती ।

देवराजः अनुक्षणं पत्नीम् आहूय उक्तवान् - ''अये ! अद्य भाग्यलक्ष्मीः कृपाकटाक्षेण अस्मान् अनुगृहीतवती अस्ति'' इति ।

भूस्वामिनः शकटः देवराजस्य कुटीरस्य पुरतः यदा स्थितः ततः आरभ्य तत्रत्याः प्रतिवेशिनः सोत्साहं प्रवर्तमानं पश्यन्तः आसन् । भूस्वामिपत्न्याः निर्गमनस्य अनन्तरं केचन देवराजस्य समीपम् आगत्य अवदन् - ''किं भवान् स्वकुटीरं विक्रेतुम् उद्युक्तः अस्ति ?'' इति ।

''आम् । यदि एतस्य जीर्णस्य कुटीरस्य विक्रयणतः सहस्रं रूप्यकाणि प्राप्येरन् तर्हि कथं वा मया विक्रयणे मनः न क्रियेत ?'' इति प्रतिप्रश्नं कृतवान् देवराजः ।

''भोः, भवतः मतिः किं विकृतिं गता ? एतादृशाय कुटीराय सहस्रं रूप्यकाणि दातुं तया किमर्थम् उद्युक्तं स्यात् ? महालाभः यदि न स्यात् तर्हि किमर्थं सा एतं जीर्णं कुटीरं तावता मूल्येन क्रीणीयात् ? भवतः कुटीरे कोऽपि महानिधिः निखातः स्यात् । अतः भवान् स्वयम् एव तं निधिं प्राप्नोतु'' इति बोधितवन्तः ते प्रतिवेशिनः ।

एतेषां वचनानि औचित्यपूर्णानि सन्ति इति अमन्यत देवराजः । तस्य पत्नी अपि प्रतिवेशिनां कथने विश्वस्य अवदत् - ''एतैः जनैः यत् उच्यते तत् युक्तम् इति प्रतीयते । भूस्वामिपत्नी अपि स्वपुत्र्याः विवाहं कारयितुं प्रयत्नं कुर्वती अस्ति । तदर्थं महतः धनराशेः आवश्यकता स्यात् एव । अतः एव निधिप्राप्त्यर्थं तया एषा योजना कृता स्यात्'' इति ।

सायं भूस्वामिपत्न्या प्रेषितः जनः सहस्रं रूप्यकाणि गृहीत्वा दातुं यदा आगतः तदा तौ दम्पती कुटीरविक्रयणं निराकृतवन्तौ ।

तदनन्तरं रात्रौ दीपस्य प्रकाशे देवराजः एकैकशः कदलीसस्यानि उत्पाट्य क्षिप्तवान् । समग्रे क्षेत्रे खननं कृतं, कुटीरस्य अन्तः अपि अन्विष्टं च । तथापि तेन किमपि न प्राप्तम् ।

तावता प्रातःकालः उपस्थितः आसीत् । देवराजेन रुदता इव उक्तम् - ''हस्तम् आगतः सुवर्णावसरः इदानीं च्युतः अभवत्'' इति ।

''तथा मा चिन्तयतु भवान् । अवसरः हस्ते एव अस्ति । भवान् सत्वरम् एव प्रस्थाय

भूस्वामिनीं वदतु - कुटीरविक्रयणाय सिद्धः अस्मि इति । पञ्चशतं रूप्यकाणि दीयेरन् चेदपि कुटीरविक्रयणम् अङ्गीक्रियताम्'' इति अबोधयत् तस्य पत्नी ।

देवराजः झटिति एव भूस्वामिनः गृहं गत्वा भूस्वामिपत्नीम् अवदत् - ''जनानां वचनेषु विश्वस्य ह्यः सायं कुटीरस्य विक्रयणं निराकृतं मया । वस्तुतः इदानीं मया विवेकः प्राप्तः अस्ति । तस्य विक्रयणं कर्तव्यम् इति सङ्कल्प्य अहम् इदानीम् अत्र उपस्थितः अस्मि । यावत् उचितं मन्येत तावत् मूल्यं दीयताम्'' इति ।

तदा भूस्वामिपत्नी मन्दहासं प्रकटयन्ती - ''इदानीं तस्य क्रयणेन किं प्रयोजनं मम ? मम मत्पतेः च काचित् स्पर्धा आसीत् । तत्र अहं पराजिता अभवम्'' इति उक्त्वा प्रवृत्तं समग्रं विवृतवती - ''भूस्वामिनः कश्चन शकटः अस्ति । विवाहानन्तरं पतिगृहम् आगता अहं ततः आरभ्य अपि पतिं सानुरोधं वदन्ती अस्मि यत् नूतनः शकटः क्रेतव्यः इति । किन्तु भूस्वामिने तु सः पुरातनः शकटः एव रोचते । अतः सः तेन एव अटति । कदाचित् अहं नूतनशकटस्य क्रयणविषये अनुरोधं कृतवती । तदा सः 'परम्परया प्राप्तं त्यक्तुं न कोऽपि इच्छति । ग्रामस्य सीमायां विद्यमानः कदलीसस्यपालकः कृषिकः अपि परम्परातः प्राप्तं पुरातनं कुटीरम् अपि त्यक्तुं न इच्छति । भवती तस्मै महान्तं धनराशिं दद्यात् चेदपि तेन सः कुटीरः न विक्रीयेत' इति उक्तवान् । मया एषः वादः निराकृतः । ततः सहस्र-रूप्यकाणां पणः निश्चितः । किन्तु 'भवतः निर्णयतः मया पराजयः प्राप्तः'' इति ।

क्षणं विश्रम्य सा पुनः अवदत् - ''भवतः कुटीरस्य कृते सहस्रं रूप्यकाणि दातुम् उद्युक्ता आसम् । यतः कुटीरं क्रीत्वा जयं प्राप्य भू-स्वामिद्वारा नूतनः शकटः क्रापणीयः इति मम विचारः आसीत् । किन्तु मतिरहितानां जनानां वचनेषु विश्वस्य भवता मयि निराशता जनिता । येषां वचनानि श्रुत्वा कुटीरविक्रयणं भवता निराकृतं ते एव मम निकटम् आगत्य स्वकुटीरान् पञ्चशतेन रूप्यकैः विक्रेतुं सिद्धाः आसन् । एतत् किं भवान् जानाति ? 'स्वबुद्धिः सुखाय, परबुद्धिः च विनाशाय' इति उक्तिः सदा स्मर्तव्या'' इति । देवराजः लज्जया शिरः अवनमय्य रिक्तहस्ततया ततः प्रतिगतवान् ।



# पलायनस्य कारणम्

भद्रगिरिः रत्नगिरिः च प्रतिवेशिराज्ये आस्ताम् । शताधिकवर्षेभ्यः अपि तयोः राज्ययोः मध्ये वैरभावः सजीवः एव आसीत् । कदाचित् रक्तपातः भवति स्म अपि । राज्यद्वयस्य अपि योद्धारः युद्धशूराः व्यूहरचने कौशलवन्तः चापि आसन् । प्रत्येकस्मिन् अपि युद्धे असङ्ख्याः सैनिकाः प्राणवियोगं प्राप्नुवन्ति स्म उभयोः अपि पक्षयोः । तथापि जयः कस्यापि न भवति स्म ।

अथ कदाचित् भद्रगिरिराज्यस्य राजा अनिरीक्षिततया मरणं प्राप्तवान् । तस्मात् तत्पुत्रः रणधीरः सिंहासनम् आरूढवान् । शत्रुगणं पराजेतुं सङ्कल्पं कृतवान् सः आक्रमणघोषणाम् अकरोत् । दिनद्वयाभ्यन्तरे एव उभयोः अपि पक्षयोः सैनिकाः रणरङ्गे शस्त्राणि गृहीत्वा युद्धाय सज्जाः अभवन् ।

युद्धारम्भक्षणः यावत् सन्निहितः तावता भद्रगिरिपक्षस्य शूरवीरभयङ्करः नाम दलाधिपतिः रणरङ्गतः धावनम् आरब्धवान् । अपरः दलपतिः एतत् दृष्ट्वा तं गृहीतवान् । ततः रणधीरस्य समीपं नीत्वा तस्य ग्रहणस्य कारणम् उक्तवान् सः ।

नेत्राभ्यां क्रोधाग्निं वमन् रणधीरः पृष्टवान् - ''अयि भोः ! भवान् भीमवत् दृढकायः दृश्यते । भवतः दर्शनात् शत्रुः शस्त्रम् उन्नेतुम् अपि भयम् अनुभवेत् । एतादृशेन भवता किमर्थं युद्धारम्भात् पूर्वम् एव भीरुणा इव पलायनं कृतम् ?'' इति

तदा शूरवीरभयङ्करः विनम्रः सन् - ''महाराज ! मम पलायनस्य कारणं भीरुत्वं नैव । रत्नगिरिसैनिकानां सम्मुखीकरणम् असह्यं मम । तेषां मुखदर्शनेन घृणा उत्पद्यते । अतः अहं पलायनम् अकरवम्'' इति अवदत् ।



चित्रम् - गान्धि-अय्यः 9

# अपराजेयः गरुडः

वज्रपुर्याः प्रधानमन्त्री पुष्पराजः नरेन्द्रदेवेन, तत्पुत्रेण रवीन्द्रदेवेन च पर्वतगुहासु मिलतः राज्ञः अनुरोधं पुरस्कृत्य । आप्तपुरुषः तत्र आगत्य वार्तां श्रावयति यत् नागबन्धोः आत्मना वनवासिकन्यायां तादृशी शक्तिः पूरिता अस्ति, यया आदित्यारुणयोः विवाहभङ्गः सिद्ध्येत् । पुष्पराजः आत्मना साकं तस्याः कन्यायाः नयनम् अङ्गीकरोति ।

सा वनकन्या अरुणायाः प्रकोष्ठविवरणं पृच्छति ।

अहं राजकुमारेण प्रेषिता अस्मि ।

इतः साक्षात् अग्रे गच्छतु । तत्र दृश्यते सुसज्जः प्रकोष्ठः ।

*निद्रामग्नाम् अरुणां पश्यति वनकन्या । ताम् उभयतः मञ्चस्य उपरि शयानम् आसीत् परिचारिकाद्वयम् ।*

*विवाहदिनम् उपस्थितम् । आदित्यः रक्षकम् आह्वयति ।*

ध्यानं कर्तुं गच्छामि । कोऽपि विघ्नः नोत्पद्येत । सावधानः भवतु ।

*आदित्यः अन्तर्दृष्ट्या कञ्चन सर्पम् अपश्यत् । समीपे पिच्छम् अपि ....*

*... एषः गरुडरूपेण परिवृत्तः भवति । सर्पः अदृश्यः भवति ।*

किम् इयं पूर्वसूचना कापि ?

कोऽपि सव्याकुलः द्वारध्वनिं करोति ।

कः भवितुम् अर्हति ?

आदित्यः द्वारम् उद्घाटयति ।

रामसिंह ! का वार्ता ? राजा कुशली खलु ?

सः तु कुशली एव श्रीमन् ! किन्तु अरुणा ...

... तस्याः प्रकोष्ठः धूमेन आवृतः अस्ति ।

आदित्यः पिच्छं स्वीकृत्य स्वस्य उष्णीषे संयोजयति ।

रामसिंह ! अरुणायाः आवासं गच्छाव ।

अरुणायाः प्रकोष्ठस्थः धूमः वृत्ताकारेण भ्रमन् सर्परूपं प्राप्नुवन् अस्ति । किञ्चिदिव महिलामुखम् अपि भासते । ताभ्यां शय्यायां पतिता अरुणा दृश्यते ।

तस्याः केशाः अव्यवस्थिताः सन्ति । सा निश्चलदृष्ट्या आदित्य पश्यति ।

अरुणे ! का एषा स्थितिःभवत्याः ?




निश्चेष्टायाः अरुणायाः दर्शनेन आदित्यः विस्मितः भवति । सा कृशा जाता अस्ति । आभूषणैः विहीनायाः तस्याः केशाः इतस्ततः विकीर्णाः सन्ति ।

अरुणायाः दुःस्थितेः वार्तां श्रुत्वा राजा महेन्द्रवर्मा धावन् आगतः ।

अरुणे ! एषः भवत्याः विवाहदिवसः । उत्थाय सज्जा भवतु भवती ।













अरुणायाः एका परिचारिका जागरिता भवति ।
अहो ! दीर्घकालं प्रसुप्ता आसम् इति मन्ये ।


रेखे, उत्तिष्ठतु, कियन्ति कार्याणि सन्ति !
राजकुमारी किं चिन्तयेत् ?


राजकुमारीं दृष्ट्वा ते उभेऽपि मूकविस्मिते भवतः ।
निश्चला प्रतिमा इव एषा किं पश्यति ?


क्षाम्यतु । बहुकालं सुप्तवत्यौ आवाम् ।


राजकुमारि ! आदिश्यताम् किं करणीयम् आवाभ्याम् ?
राजकुमार्या किमपि उत्तरं न दीयते ।
वैचित्र्यम् एतत् ।


माला रक्षकस्य समीपं गच्छति ।
राजकुमारी जागरिता किम् ? मया राजकुमारः सूचनीयः अस्ति ।
आम् । किन्तु...


माले ! भवती गत्वा राजकुमारं सूचयतु ।
यथा सा किमपि वदेत् तथा प्रयासं करोतु ।


गच्छन्ती माला रामसिंहेन मिलति ।


श्रीमन् ! अत्र किं प्रवर्तमानम् अस्ति ?
माले ! समयः अत्यल्पः अस्ति । विवाहस्य स्थगनं कृतम् अस्ति ।


विवाहः स्थगितः ! किमर्थम् ?
किं वदन्ती अस्ति माले ? राजकुमारी मतिभ्रान्तिप्रभावे अस्ति ?


नागबन्धुः आदित्यं हनिष्यति ।
अनुवर्तते

# कुरुक्षेत्रीयः महोत्सवः



हरियाणाराज्यस्य कुरुक्षेत्रं कारणद्वयतः स्मर्यते लोकेन । प्रथमं कारणं तु – अष्टादश दिनानि यावत् प्रवृत्तं कौरवपाण्डवयोः युद्धम् । अपरं च – तत्र प्रवृत्तः गीतोपदेशः । यदा युद्धारम्भसुचनारूपेण उभयपक्षीयैः अपि नायकैः शङ्खोद्घोषः कृतः तदा अर्जुनस्य मनसि प्रश्नः उद्भूतः यत् अहं भीष्मद्रोणादीन् गुरून् एतान् कथं हन्तुम् अर्हामि इति । ततः सः क्लैब्यं प्राप्य रथे उपाविशत् । अनन्तरं कृष्णः तं कर्तव्यम् उपादिशत् । तत् एव गीतोपदेशत्वेन ख्यातम् अभवत् । एतस्याः गीतायाः जन्मभूमिः अस्ति एतत् कुरुक्षेत्रम् । तस्मात् एव गीताजयन्तीं निमित्तीकृत्य अत्र सप्ताहात्मकः कार्यक्रमः प्रवर्तते । एतस्मिन् वर्षे स च उत्सवः डिसेम्बर्मासे प्रथमदिनाङ्कात् सप्तमदिनाङ्कपर्यन्तं प्रवर्तिष्यते । समग्रात् देशतः आगताः सहस्रशः जनाः सम्मिलन्ति अत्र । एतस्य उत्सवस्य काले कुरुक्षेत्रं प्रति गमनं सांस्कृतिकम् आध्यात्मिकं च अनुभवं ददाति इति भावयन्ति जनाः ।

परमपवित्रग्रन्थत्वेन भाव्यते भगवद्गीता । सा बोधयति यत् जीवनपद्धतिः पूजापद्धतिः च या कापि भवेत् चेदपि शुद्धेन मनसा सर्वेषाम् अपि हितं यः चिन्तयति सः एव उत्तमः इति ।

कुरुक्षेत्रे स्थिते ब्रह्मसरोवरे सन्निहितसरोवरे च क्रियमाणं स्नानं पुण्यप्रदम् इति जनाः भावयन्ति । अत्र सप्त दिनानि अपि भगवद्गीतापारायणं प्रचलति । शिक्षणविषये चर्चा, महाभारतकथानां श्रावणं, पारम्परिकं नृत्यं, महाभारतकथासम्बन्धिनां रूपकाणां प्रदर्शनम् इत्यादिकम् अपि प्रचलति अत्र ।

भगवान् बुद्धः, दशापि सिक्खगुरवः च एतं प्रदेशं प्रति पूर्वम् आगताः आसन् इति तु एतस्य प्रदेशस्य अपरं वैशिष्ट्यम् ।

**न्यूट्रिन्स्पर्धा – ३**




**उत्तराणि**

१. (आ) मध्यप्रदेशः ।

२. (अ) नर्मदा ।

# पुरोऽयं भवताम् पुरोऽयं भवताम्

## भवदर्थकं विज्ञानम्



### मण्डूके वर्णमयता

यदि मानवेषु कश्चित् रक्तनेत्रः भवेत् तर्हि जनाः तत्समीपं न गच्छेयुः एव, साङ्क्रामिकेण नेत्ररोगेण पीडितः स्यात् अयम् इति चिन्तयन्तः । मण्डूकः यदा रक्तनेत्रः भवति तदा अपि अन्ये जन्तवः एवमेव व्यवहरन्ति । मानवमण्डूकयोः भेदः नाम मण्डूकः अन्यजन्तूनां निवारणाय एवं व्यवहरति ।

रक्तनेत्रलार्हः मण्डूकः केन्द्रामेरिकापरिसरे वृष्टिबहुले अरण्ये वृक्षेषु निवसति । शत्रुभ्यः रक्षणाय दैवेन तस्य शरीरस्य नेत्रयोः च वर्णमयत्वं कल्पितम् अस्ति । नीलमिश्रितः हरितः वर्णः तस्य शरीरस्य । नेत्रयोः कस्मिंश्चित् पार्श्वे पीतवर्णरेखा भवति । तृतीया भ्रूः अपि भवति एतस्य शरीरे । निमीलनात् विना एव नेत्ररक्षणं करोति एषा भ्रूः ।

एषः विशिष्टः जीवी शत्रुषु भीतेः उत्पादनाय आत्मरक्षणाय च एतां वर्णमयतां उपयुङ्क्ते । शरीरस्य वर्णमयताकारणतः वृक्षपरिसरे एषः विशेषतः शोभते । प्रौढजीवनम् एषः प्रायः यापयति वृक्षस्य उपरि एव । निसर्गे यथा यथा सान्द्रता शुभ्रता च दृश्यते तथा तथा एतस्य शरीरे अपि यथापरिसरं वर्णपरिवर्तनं दृश्यते ।

## भवतां परिसरः



### शाकवर्धने विक्रमः

प्रतिवर्षं शतशः कुष्माण्डवर्धकाः आत्मना वर्धितस्य विशिष्टस्य कुष्माण्डस्य प्रदर्शनाय सम्मिलन्ति जागतिके स्तरे । ते सर्वे चिन्तयन्ति यत् मया वर्धितं कुष्माण्डम् एव पारितोषिकार्हं भवेत् इति । ओरेगान्देशीयः स्टीव्डाल्टाटसः ३२८ किलोमितस्य फलस्य वर्धनेन जागतिकं विक्रमं साधितवान् अस्ति ।

लाङ्ग्-ऐल्याण्ड्प्रदेशे प्रवृत्तायाः कुष्माण्डस्पर्धायाः आयोजकः आन्द्रोव्सबिनः वदति यत् महाकुष्माण्डस्य वर्धनं न हि सरलम् इति । एतदर्थं समर्पणभावः, महान् परिश्रमः च अपेक्षितः भवति । प्रतिदिनं तस्य व्यवस्थापरिशीलनम् अपि अत्यावश्यकम् ।

जगति अतिमहतः गृञ्जनकस्य भारः ९ किलो, तादृशस्य एव सेवफलस्य भारः भवति २ किलोमितः, तादृशस्य एव क्याबीजशाकस्य भारः भवति ५६ किलोमितः ।

# पुरोऽयं भवताम् पुरोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### हिक्का



हासः किञ्चन उत्तमम् औषधम् । एषु दिनेषु 'हासचिकित्सा' इति वचनम् आधिक्येन श्रूयते । एषा चिकित्सा मनसः भारम् अपाकरोति । यथा अधिकस्य आहारस्य सेवनम् अनानुकूल्याय भवति तथा एव अधिकः हासः अपि कष्टाय एव । यदा हासाधिक्यं भवति तदा शरीरमध्ये निग्रहशैथिल्यं जायते । ततश्च सङ्कोचः, वाचिकाङ्गे शीघ्रस्पन्दः च सम्पद्यते । तस्मात् हिक्कायाः उत्पत्तिः । समीचीनः श्वासनिग्रहः हिक्कानिवारणाय स्थितः सरलः मार्गः । एतस्मात् अङ्गाराम्लवायुः शरीरे सङ्गृहीतः भवति । एषः वायुः हिक्कोत्पत्तिं निगृह्णाति । अमेरिकादेशीयः लोवाप्रदेशीयः चार्ल्स् ओस्बर्न्वर्यः प्रतिनिमेषं ४६ हिक्कां कुर्वन् ६९ घण्टाः यावत् निरन्तरं हिक्कितवान् । एषः एव जागतिकः विक्रमः ।

## अभिवर्ध्यतां ज्ञानशक्तिः

*उक्तीनां स्मरणस्य द्वारा वयम् अत्र महापुरुषान् कांश्चन स्मराम*



१. 'अन्तः निहिता परिपूर्णता विद्याभ्यासतः प्रकाश्यते' इति कः उक्तवान् ?

२. 'शक्तिः प्राप्यते न शरीर-सामर्थ्यात्, प्रत्युत अचलात् आत्मविश्वासात्' इति केन उक्तम् ?

३. 'दुर्बलस्य क्षमा सर्वदा अकिञ्चित्करी । शक्तिमतः आयुधं भवति सा' इति वचनं कस्य ?

४. 'क्रीडास्फूर्तिः अवश्यं भवेत् क्रीडायाम्' इति केन उपदिष्टम् ?

५. 'मस्तिष्कस्य कस्मिंश्चित् कोणे संरक्ष्य स्थापयितुम् अर्हं न भवति ज्ञानम्' इति कः अवदत् ?

*(उत्तराणि ६६ तमे पृष्ठे)*



# चित्रशीर्षिकास्पर्धा

अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्र-शीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



KALANIKETAN BALU



KALANIKETAN BALU

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'डिसेम्बर्'मासस्य शीर्षिकाप्रेषिका -

**कु. प्रतिमा**

द्वारा - श्री रत्नाकर बारीक, बुकुरामुण्डा

बादिकटा, पद्मपुरम्,

बरगढ - ७६८ ०३६

पुरस्कृता शीर्षिका





यानं चालयामि इत्येषाशा ।

पयः पातुं न शक्नोत्येषा ॥



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. स्वामी विवेकानन्दः ।

२. महात्मना गान्धिवर्येण ।

३. रवीन्द्रनाथठागोरवर्येण ।

४. जवहरलालनेहरूवर्येण ।

५. डा० एस्. राधाकृष्णन् ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)



# पाकशालायाम् अनिलस्य सञ्चयः कथम् ?



वृन्दायाः महती समस्या नाम पाकानिलकोषे अनिलः समाप्तप्रायः इति । अनिलवितारकः उक्तवान् आसीत् यत् सप्ताहात् पूर्वम् अपरस्य अनिलकोषस्य प्राप्तिः असम्भवा इति । प्रतिदिनं तया पत्ये, पुत्राय, श्वश्रूश्वशुरयोः च कृते पाकः सज्जीकरणीयः भवति स्म पार्थक्येन । तस्याः मातुलानी पतिसहिता आगता आसीत् अपि । अनन्यगतिकतया स्वसमस्या यदा निवेदिता तदा मातुलानी अवदत् – ''भवती चिन्तां मा करोतु । अहं पाकशाला-दायित्वं निर्वक्ष्यामि'' इति ।

मातुलान्या पाकशालादायित्वं स्वीकृतम् । तत् दिनं तु निरातङ्कं गतम् । अनन्तरदिने अपि अनिलविषये अप्रिया वार्ता न श्रुता एव । एतस्य रहस्यं मातुलानीम् अपृच्छत् वृन्दा । तदा मातुलानी अवदत् – ''अनिलस्य सञ्चयाय यद्यत् करणीयं तत्सर्वं कृतं मया । भवत्याः गृहे चतुर्विधाः पाकाः सज्जीकरणीयाः भवन्ति । पार्थक्येन पाकं कुर्वती भवती अनिलव्ययम् अधिकं करोति स्म । मया एतत् निवारितम् । भवत्याः पाकशालायां स्थिता महाबाष्पस्थाली मया उपयुक्ता । अन्न-शाक-दालादयः युगपत् एव पक्वीकृताः मया । विभिन्नेषु पात्रेषु संस्थाप्य मया एतत् कार्यं साधितम् । भवत्या एवं न क्रियते स्म । अतः कृतस्य पाकस्य उष्णीकरणाय पुनः चुल्लेः उपयोगः करणीयः भवति स्म । सर्वे यदि युगपत् भोजनाय उपस्थिताः भवेयुः तर्हि पौनःपुन्येन उष्णीकरणस्य आवश्यकता अपि न भवेत् । एवम् अनिलसञ्चयाय सन्ति केचन उपायाः'' इति ।

''अहो, एते अतीव सरलाः उपायाः !! मया इतः पूर्वम् एते न आश्रिताः आसन् । इतः परम् अहम् एतेषाम् आश्रयणं करिष्यामि । सकृत् एव पाकानां सज्जीकरणे प्रयासः, युगपत् एव भोजनाय व्यवस्था च अनिलव्ययं न्यूनीकरिष्यति इति तु सत्यम्'' इति अवदत् वृन्दा ।

